## ॥ अथ श्रीवरपण्डितकृता तृतीया जैनराजतरङ्गिणी ॥

### प्रथम तरङ्गः ।



शिवायास्तु नमस्तस्मै सर्वलोकमहीभुजे । अशेषक्लेशनिर्मुक्तनित्यैश्वर्यसुखाप्तये ।
प्रेम्णार्द्धं वपुषो विलोक्य मिलितं देव्या समं स्वामिनो मौलौ यस्य निशापतिर्गगनसुता वेणीनिशा मिश्रितः ।
आस्ते स्वाम्यनुवर्त्तनार्थमिव तत्कान्ता वपुः खण्डितं देयाद्वस्य भावना स भगवान् देवोऽर्द्धनारीश्वरः ।
वन्द्यास्ते राजकवयः पदन्यासमनोहराः । ख्याताये सर्वैः सर्वैः श्रीरसीरविवेकिनः ।
अनित्यतान्धकारेऽस्मिन् स्वामिशून्ये महीतले । काव्यदीपं विना कः स्यादद्भुतवस्तुप्रकाशकः ।
येषां करोमि वपुरस्थिरमत्र राज्ञां तेषामयं जगति कीर्त्तिमयं शरीरं ।
आकल्पवर्त्ति कुरुते किमितीव रोषाद्धाताहरद्भ्रमतः कविजोनराजं । ५
श्रीजोनराजविबुधः कुर्व्वन् राजतरङ्गिणीं । सायकाग्निमिते वर्षे शिवसायुज्यमासदत् ।
शिष्योऽस्य जोनराजस्य सोऽहं श्रीवरपण्डितः । राजावलीग्रन्थशेषापूरणं कर्त्तुमुद्यतः ।
क्व काव्यं सद्गुरोस्तस्य क्व च मन्दमतेर्मम । वर्णमात्रेण खद्योतं घनसारायते कथं ।
राजवृत्तानुरोधेन न काव्यगुणवाञ्छया । सन्तः शृण्वन्तु सद्भावः सुधिया योजयन्तु च ।
अथवा नृपवृत्तान्तस्मृतिहेतुरयं श्रमः । क्रियते ललितं काव्यं कुर्वन्त्वन्येऽपि पण्डिताः । १०
तन्नाद्गुणगणादानात् स्वसम्पत्तिसमर्पणात् । पुस्तवद्धिं नारेशा शासनेनामायनुपदैः ।
अतो वाञ्छन्नमेयस्य तत्प्रसादस्य निष्कृतिं । सोऽहं ब्रवीमि तद्वृत्तं तद्गुणाकृष्टमानसः ।
एकया तद्गुणाख्यानं जिह्वया वर्ण्यते कियत् । शेषवत् कोटिशश्चेत् स्युस्तास्तदा सद्भिरः क्षमाः ।
सत्यं नृपाम्बरेऽमुष्मिन्विपुले विमलाशये । गुणतारापरिच्छेदे न शक्ता भारती मम ।
तथापि सकलं चित्रपटान्ते त्रिजगत् यथा । श्रीजैनोल्लाभदीनस्य न्यस्यामि गुणवर्णनं । १५
केनापि हेतुना तेन प्राक् सद्गुरुणा न यत् । तच्छेषवर्त्तिनीं वाणीं करिष्यामि यथामति ।
आत्मजस्य नृपस्यास्य प्राप्यते राज्यवर्णनात् । प्रतिष्ठादानसम्मानविधानगुणनिष्कृतिः ।
स्वबुद्ध्युत्प्रेक्षितानेकविपद्विभवसंस्मृतेः । सृते कस्य न वैराग्यं नाम जैनतरङ्गिणी ।

श्रीजैनोल्लाभदीनः स हत्वा शत्रून्दिगन्तरे । आगत्य पैतृके देशे राज्यं राम इवासदत् ।
स्वतावशिष्टां कोषेभ्यः स्वमन्त्रोपयोगिनीं । नानापदार्थसामग्रीं राजा कविरिवाचिनोत् । ५०
तद्राज्यमालिशाहस्य राज्यकालादनन्तरं । अद्यापि कैर्न शोच्यन्ते मनो श्रीमण्डलेपनं ।
धर्मराजोपमात्तस्मात्प्राप्ता नरकयातनाः । अपराधानुसारेण याताः केचिद्दिवोऽभजन् ।
षाड्द्रव्यगुणसत्कर्मसमवायविशेषभृत् । सामान्योऽप्यधाच्चित्रं नानार्थपरिपूर्णतां ।
नेत्राञ्चले समुद्रस्याश्रयाद्यो कमलाश्रिते । यस्य श्रीरवसन्नित्यं वदने सदनेऽपि च ।
वङ्गालमालवाभीरगौडकर्णाटदेशगा । यत्कीर्तिरागमालेव बभूवामृतवर्षिणी । ५५
भास्वान् राजा सदाचारो बुधः सधिषणो महान् । अथादिग्भ्यशाख्यातिमाभजस्य यशोचिता ।
यं सम्प्राप्य गुणाः सर्वेऽप्यलभन्नधिकां श्रियं । रात्रौ कुमुदवृन्दानि चिन्तामणिमिवोडुपं ।
षड्दर्शनक्रिया यस्य वृत्तं समन्वरञ्जयत् । सुमनोरञ्जिताह्लादा ऋतवो नन्दनं यथा ।
त्रिवर्गं प्रोज्ज्वलं दृष्ट्वा यस्मिंश्चन्द्रमिका इव । अवसन्नतयस्तिस्रः समसेकमना इव ।
भूपेऽर्थैः पूरयत्यर्थिसार्थं पार्थोपमेऽन्वहं । आज्ञामार्थमिवैतस्य यशः सर्वदिशोऽगमत् । ६०
शिल्पिनो विश्वकर्माणं गारुडं योगिनो गणाः । अवतीर्णं रसज्ञा यं नागार्जुनमिवाविदन् ।
तस्यापि योग्यतादर्शि यैः शिल्पकविकौशलात् । तथा प्रमादमकरोत्तत्पुरास्ते यथाभवन् ।
काव्यशास्त्रश्रुतैर्गीतनृत्यतन्त्रीसमाकृतैः । आजीवमनयत् कालं काव्यानुदिशमानसः ।
न्याय्यं कुर्वन्ति शास्त्रज्ञाः कार्यभारं सुधीरताः । तेभ्यः शिप्रा च स्वे धर्मे निष्ठतेत्येवमभ्यधात् ।
कार्यावेगैः सततमाशुगैर्यस्य ताडिताः । आसन्नन्दिगन्तेषु मशका इव शत्रवः । ६५
तस्य स्वपरवृत्तान्तं नित्यमन्विष्य तस्करैः । केवलं स्वप्रवृत्तान्तो बभूवाविदितो विशाम् ।
गृहं गृहस्थवृत्तस्य ध्यायतो नीतिशालिनः । अन्यायाज्ञाशकत्वेषु काकिनीमपि कश्चन ।
आदिशत्सर्वेभ्यास्तस्याऽकूपपाठोन स तस्करान् । सत्कर्माकारयद्भूपादायःशृङ्खलान्बलात् ।
न कः प्रवर्तते चौर्ये नीचो वृत्तिकदर्थितः । इति कारुणिको राजा तेभ्यो वृत्तिमकल्पयत् ।
चक्रादीन् क्रमराज्यस्थान् दृष्टान् ज्ञात्वा स तद्भुवं । कृत्वा मडवराज्यान्तर्देशवृत्तीन् न्यवेशयत् । ७०
तस्करोपद्रवे राज्ञा नीत्यैव शमिते सुखं । गृहेष्विवाटवीष्वन्तः पथिकाः शेरते स्म हि ।
सत्प्रकृतिमध्यस्थो नित्यसर्वाङ्गवर्द्धनः । स्वतन्त्रवृत्तिर्भूपालो रेमे नानापुरेषु सः ।
मन्दं हानरहितान्निवार्य स भजन् पूर्वाचलारोदयं यो नित्यं कमलाकरेषु रसिको बिभ्रत् प्रतापोदयं ।
सङ्कोचं कुमुदाश्रयेषु रचयन् पद्माकरोत्पूजितः स्यः कस्य न हन्तलोकमहिमा भास्वान् यशस्वी विभुः ।
धात्र्याहठकुरराज्ञो विभवश्रीमदोद्धताः । विस्फूर्जिताचारिणोऽश्वासन् गजा इव निरङ्कुशाः ।
श्रीसेरठकुरो ज्येष्ठः प्राड्विवेकपदोज्ज्वलः । तेषां मुसुलठक्कुरोऽपि बभौ सत्क्षगुणोज्ज्वलः । ७५
करेन काष्ठवाटं स प्राप्तोऽवटपथान्ततः । हिमान्यन्तरदुर्गाद्रिर्हिमान्यन्तरमासदत् ।
स्थित्वा माणिक्यदेवाये समुद्रस्यान्तरे चिरात् । चिकदेशं ततः प्राप किञ्चित्प्राप्तपरिच्छदः ।

तद्देशकालविषमावस्थाशतहतोऽपि सन्। स तिष्ठ प्रेष्यवत् भट्टपादशोचं समासदत्।
उद्गन्धतामथोत्पन्नस्फोटवैकल्यशान्तये। वैद्यैर्व्यरचयद्वैकपादोऽभूच्छीर्णितावधि।
तत्रोपायान् बहून् कुर्वन् स्वदेशविभवाप्तये। यथाकथञ्चित्तत्रस्थः पञ्चशः सोऽत्यगात्समाः।

अतःपरं किञ्चिद्धन्यचरितं कालवशाच्छिन्नं।

स सिन्धुहिन्दुवाडादिदेशान् जित्वा बहिः स्थितान्। प्रतस्थे भट्टदेशं स जेतुं सकटको नृपः।
वनमध्ये प्रविश्यैव नरकं कालपञ्जरं। भित्तिस्थदीपमाचे ते पश्यन्ति स्म सकौतुकं।
तपस्तप्त्वा चिरं प्राप्य योगसिद्धिमसौ नृपः। फणीव कञ्चुकं पूर्व्वगुहायामत्यजत्तनुं।
इत्याकर्ण्यान्तिनोऽन्ये वा ये बुद्ध्वा सत्यमूर्च्छितं। तेषां प्रामाण्यमकरोत्स राजा च सविस्मयं।
एवं महानुभावत्वं विना व्यवहितं नृपः। जानीयात्कथमित्याह विद्वज्जनउदारधीः। इत्युपोद्घातः।

अथ राज्यवर्णनं।

ज्येष्ठमादमखानस्य हाज्यखानस्य मध्यमं। बहामखानमनुजं पार्थिवोऽजीजनत्सुताम्।
ज्येष्ठा लावण्यसौभाग्यसुभगैः प्राक्तनैर्गुणैः। जनकं रञ्जयामास चन्द्रमा इव वारिधिं।
प्रत्यहं हाज्यखानः स कर्पूर इव सौरभैः। बाललीलायितैस्तैस्तैः स्वमुदात्तमजिज्ञपत्।
तौ सुतौ सम्मतौ पित्रोरक्षणायाक्षिपन्नृपः। स्वधान्वेयतया स्वस्वोदयोद्धुरपक्षयोः।
स्वपक्षस्थापनादक्षाः परपक्षेष्टखण्डनाः। तार्किका इव तेऽन्योन्यं धात्रेयाहङ्कुराबभुः।
सौदर्य्यस्नेहवृक्षस्य मूलच्छेदनकारिणः। तेऽन्योन्यगोचरद्वेषाग्नयोरासन् समत्सराः।
राजपुत्रास्त्रयस्तस्य गुणातिशयसुन्दराः। तत्कृतान्योन्यवैरेण समं वृद्धिं समाययुः।
देशसंवादिशोऽयं तस्यात्मघमोमहीपालः। तस्मिन् सम्मुखे सुखितौ दुःखिनि तस्मिन् सदुःखोऽसौ।
अन्योन्यं मरुपोराजपुत्रयोर्मन्त्रिदुर्णयात्। अभूज्ज्येष्ठकनिष्ठत्व प्रक्रियारचितं तयोः।
श्रुत्वाथ पुत्रयोर्वैरमन्योन्यं जातु भूपतिः। आह स्मादमखानं स विद्वेषगमसत्वरं।
युक्तमुक्तं न रक्षसि कुपुत्र यदि सद्वचः। मानप्राणधनध्वंसी प्रत्युक्तोऽन्यथाब्रवीत्।
श्रुत्वेति पितृसन्देशं स भृत्यानब्रवीदरं। सत्पर्णात्समयायामः सुखं तत्रैव नः सदा।
अथोचुस्ते तव भ्राता दाता जातोऽत्युदारधीः। स्वलक्ष्मीं भृत्यसात्कर्तुं स क्षमो न भवान् क्वचित्।
वरं मरणमेवास्तु तदपि नोऽद्य सेवया। विक्रमादिगुणैर्हीनं न त्वामेवं भजामहे।
अथज्ञानुजयोराजपुत्रयोः सुखदुःखयोः। विपर्य्ययं व्यधाद्वेधाः प्रमातेव विभागिनोः।
अथाशङ्क्य नृपः पापं तद्वधात्कतिचिद्दिनैः। बहिर्निष्कासयामास भट्टमार्गेण तं सुतं।
वज्रबाणप्रकारांश्च शिल्पिनः समदर्शयन्। यस्योऽत्रापि ध्वनिर्धीरलोकहृत्कम्पकारकः।
तद्यन्त्रभाण्डभेदांश्च तत्सङ्घातुमथाव्रवान्। आसीत्तदाश्वपतिः संहतान् शिल्पिनिर्मितान्।
प्रशास्ति क्रियतां यन्त्रभाण्डेष्विति नृपाज्ञया। मयैव रचितान् श्लोकान् प्रसङ्गात्कथयाम्यहं।
यदनुग्रहेण राज्ञां समयो लीलाविलाससमयः। समयज्ञ यन्त्रतन्त्रैः चिराम्प्रतिष्ठां क्रियात्समयः।

रसवसुमितिशिखिचन्द्राङ्के शाके नाकेशविश्रुतो राजा । श्रीजैनोल्लाभदीनः कश्मीरान् पालयन् विजयी ।
वर्षे शशिवेदाङ्के निर्मितवान् यन्त्रभाण्डमिदं । तद्दिति मौसुलभाषाख्यातं लोके च तन्नाख्यमिति ।
दुर्गेषु दुर्गनिपरं घनस्फोटकरं तुरुष्कदर्पहरं । दूरोन्मुक्ताश्मरं कटकवनान्यद्दहनपरं ।
सारं सुरीनिबद्धं घनघोषं शिल्पिकल्पितमहार्थम् । नवमिव नगरं नृपतेः कथं स्याद्यन्त्रभाण्डमिदं ।
धातुविभक्तिस्फारात्पदप्रवृत्त्या प्रयोजिते ग्रन्थे । यौगिकशब्दैश्चैतैर्भवत्विदं वृद्धिगुणयुक्तम् । ८०
इति पद्याङ्किता यन्त्रभाण्डाली व्यरच्यत । यदुद्भीष्मध्वनिश्चक्रे मेघगर्जिततर्जनं ।
कालेनादमखानेऽथ भुट्टाक्षितया समागते । हाज्यखानोऽकरोत् यात्रां लोहराद्रौ नृपाज्ञया ।
कथं पि कुल्किकायुग्मनेककम्पुनि स्थाप्यते । इति ज्ञात्वा सुतौ राज्ञा कारितौ निर्गमागमं ।
जनकस्याग्निके खानपानलीलोत्सवादिकं । आदमखानः सप्ताहोविद्धेऽनुदिनं ततः ।

दृष्ट्वा सतीसरसि येन सुखस्थितिः सा भीतः स यद्यपि गतो घनकालदोषात् ।
यावन्न नाशमुपयाति किरातघातैस्तावत् कथं तदवमुञ्चति राजहंसः । ८५

अथाष्टाविंशवर्षेऽपि रात्रचलवणादिभिः । रुद्धोऽरितोऽकरोत् खानः कश्मीरागमनस्पृहां ।
स्वामिसंवादपक्षीयास्ते कश्मीरसुखभागिनः । क्लिश्यामः परदेशेऽत्र वयमेव महोज्झिताः ।
राज्ञानकप्रतीहारमार्गेशकुलजादयः । अस्मत्प्रतीक्षिणः सर्वे तत्र वीरा दृढोद्धुराः ।
यद्यप्यवचनवादी भूभुजो नियतो भवान् । तावतैव स किं क्रुद्धो रुन्ध्यात् करुणापरः ।
पुत्राधादमखानस्य निर्यातः स्वबलान्वितः । स्वतः स नश्यति क्षिप्रं स्नेहापादिव पोतकः । ९०
अमी राजपुरीयाद्याः सर्वेऽस्मच्छुभकाङ्क्षिणः । तत्संनैवाधुना यामोऽत्र किं तिष्ठति पादपात् ।
सुतेऽरिणप्रतीहारे वीराः के सन्ति तत्पुरे । इति सत्पेशलकपदं स्वर्गं गन्तुं तवोचितं ।
विश्वासेऽस्मो वयं स्वस्थावीराणातैपैलके सह । यास्यामः कीदृशं शौर्यमेकदा द्रष्टुमर्हसि ।
तथेत्युक्त्वाथ खानेन पृष्टो तस्मान्निजो मतं । सफित्येठाकुरस्याज्ञन्मोमयेतयाचतां ।
देव सेवकाः सर्वे समरोत्कण्ठिताशयाः । देशकालावनालोच्य कथयन्त्यसुखप्रदं । ९५
कथमभ्यन्तरं यामः सति राज्ञि मदोर्जिते । प्रदीप्तं वह्निं मार्तण्डकुण्डेन पिदधाति कः ।
यावज्जीवति भूपालस्तावत् क्रोधयितुं क्षमः । सोऽनुवर्तनं कर्तुं तद्युक्तं तव साम्प्रतं ।
प्रसन्ने जनकेऽस्माकं भवेयुः का न सम्पदः । ईश्वरे च गुरौ भक्तिर्भवते पुण्यकर्मणां ।
अस्य कोपेन यत्नार्थं परानुपसेवोऽस्तु तत् । दुर्दिने या रवेर्दीप्तिः प्रदीपात्सम्भवतो न सा ।
स्वलीलिप्सासमालिन्यं सततं नयवेदिनः । सदयादर्शैरपोत्सृष्टं नास्य दृश्यते । १००
निर्भोगगोष्ठीनिष्ठस्य तदपत्तावविवेकिनः । कृपाब्धेरस्य नो किञ्चित् छलमत्र सुखप्रदं ।
तद्भृत्यपितृपक्षेऽपि स्वामिभक्तिं न योऽत्यजत् । तेनैवान्तर्गतः स्वाध्यक्षोऽभूत् जैनभूपवत् ।
शौचार्दमार्दवोपेता योग्या कार्यविचक्षणा । जाने तेनैव पुत्रेण सन्ततिस्तस्य राजते ।
स पिता त्वं सुतस्तस्य वयं सर्वे स्वसेवकाः । गत्वाभ्यत् कुर्महे युद्धं जयोऽस्माकं भवेत् कथं ।

हतास्येत् कोऽपि तद्भृत्या बहुभृत्यस्य का क्षतिः। एकपत्रक्षये किं स्यात् महद्रुमस्य जवाल्पता।
न शिवाशकुनाः सन्ति देशाः पर्व्वतदुर्गमाः। तथापि जनकस्तेऽस्माक कालो विग्रहस्य नः।
भजत्वभ्यन्तरं राजा वयं बाह्यं भजामहे। तत्प्रसादाद्धि देवास्तां राज्यं कथं विना न किं।
ते चेद्दुर्गाधिमध्यन्ति न शेष्यन्त्यसदन्तिकात्। वयं चेदन्तरं यामो न शेष्यामः कदाचन।
इति दर्पात् स श्रुत्वापि स्थानः शूरपुराध्वना। अगाद्राजपुरीं त्यक्त्वा कश्मीरान् पिशुनेरितः।
अस्मिन्नवसरे श्रुत्वा स्वपुत्रं स्वहमागतं। स्वीयया स्वबलं तूर्णं नगराद्विरगान्नृपः।
गच्छन् सकटको राजा मरणे कृतनिश्चयः। सदुःखो निःश्वसन् श्लोकमिममेकमपाठयत्।
राज्येऽपि हि महत्कष्टं सन्धिविग्रहचिन्तया। पुत्रादपि भयं यत्र तत्र सौख्यस्य का कथा।
अधर्मशङ्का दूरेऽस्तु युद्धे जनकपीडया। वैधेयातिविधेयेन येन खेदोऽपि विस्मृतः।
त्वयि कुर्व्वति साम्राज्यं यः खेदाय समागतः। स यातु सफलः शीघ्रं त्वदीयाशिषसङ्गतां।
त्वमेवाकण्टकं राज्यं क्रिया धर्म्मक्रिया भजन्। वैरिणो विमुखा यान्तु रणे सम्यपराभवाः।
ग्रोमस्वित्यधिकास्तास्ताः शृण्वञ्जनपदाशिषः। प्रापत् सकटको राजा स सुप्रमनाभिधं।
अथ पार्श्वस्थितास्थाने पितापुत्रबलद्वये। सन्धौ नृपतिदूतं विप्रमेकं व्यसर्जयत्।
स गत्वा नृपनन्दनमब्रवीदिति निर्भयः। किं वक्षीति क्षणं क्रुद्धैस्तत्सभ्यैः परिवेष्टितः।
राजपुत्र महाबाहो दाक्षिण्यामृतसागर। शृणु पित्रा समादिष्टं यत्तत् सर्व्वं ब्रवीमि ते।
फलं संसारवृक्षस्य लाभोऽमुत्र परत्र च। पितॄनिर्व्वाणको नित्यं पुत्रः केनाम निन्द्यते।
इत्थं सञ्चिनुते सर्व्वं पुत्रार्थं प्रयतो यतः। वार्द्धक्ये वचनग्राही भवेत् पितृसुखप्रदः।
इत्थं लोकद्वयं स्थित्या त्वयि जाते सुते मम। दूरे सर्व्वसुखाशास्तु चिन्ता प्रत्युत वर्द्धिता।
त्वत्कृतोद्दुर्न्नाम्नाशीनिःश्वासीयदवाम्बहं। मलिनीकुरुते शुद्धं मद्राज्यं मुकुरोपमं।
जीवनाशोद्यता ये मे त्वत्सम्मुखकुतूहलाः खलाः। सुचिरं नैव तिष्ठन्ति मरमस्थारका इव।
मदादेशं विना देश किमर्थं स्वयमागतः। केन राज्यं बलात् प्राप्तं निजभाग्योदयं विना।
वाह्यदेशावनिः सर्व्वा भुज्यते तृप्यसे न किं। येन मण्डलमात्रं मेऽवशिष्टं हर्त्तुमागतः।
तन्निवर्त्तस्व मा पुत्र पापबुद्धिं वृथा कृथा। बलद्वयवधात् पापं तवैतत् परिणेष्यति।
इत्युक्तिः पैतृकी प्रोक्ता किन्तु सत्यमहं ब्रुवे। सह्यन्ति भूपाः शेषमायात् त्वद्भटा घटका इव।
इति हृद्यान्तरामुक्तिं श्रुत्वा विप्रस्य ते भटाः। कृत्वा कर्णाश्रुधुरका दायादेषु विशेषकान्।
तं दृष्ट्वा शान्तवानोऽथ स नृपः पितुरागमत्। अभिमन्युप्रतीहारमुख्यानास्यादिदं वचः।
वरं पादप्रणामार्थं पितुर्य्यामि मुताबलात्। भूपसुतोऽय रुष्टो वा यत् करोतु करोतु तत्।
सर्व्वथा तातपादा मे सेव्या रक्षेत् स नो ध्रुवं। तस्मा कुरुत युद्धेऽस्मिन् संरम्भं चेप्सितं मम।
किन्तु स्वप्नेऽपि भूपाय नानिष्टं चिन्तयाम्यहं। यो मे देवाधिकः पूज्यो लोकद्वयसुखप्रदः।
क्वचिन्मेऽग्रे समायाति रणायायाति सो नृपः। इत्युक्तं तेन संप्राप्तो मार्गं पितृवधोद्यतः।

अत्रेति मन्त्रिणस्तस्माज्जातविप्रत्ययास्ततः । तत्पुरस्त्राणबन्धाया निष्ठुरं तेऽभ्यवर्णयन् । १२५
यदोक्तं समयेनाथ याम इत्यवधीरितं । प्रारब्धस्यास्य गमनं तद्युक्तमधुना तव ।
यूयं चेत् जातसौहार्दा मार्दवानन्दितापराः । वयमेव हताः कष्टं क्लिष्टास्त्वत्सेवनाश्रया ।
भवेत् सन्तप्रयोः सन्धिर्नित्यं नैककटाक्षयोः । तदन्तः पूरणी चिन्ता सैव द्वन्द्वहते क्षणात् ।
भवान् स्वामी वयं दासाः पौरुषं पश्य साम्प्रतं । अथवैतत्र राज्याप्तिर्नेष्टो याहि यथागतं ।
यावत् युद्धं करिष्यामस्तावदेव विलम्ब्यतां । पश्चात्त्वयास्तु कर्त्तव्यं यत्पुनस्तत् समाचर । १३०
अस्मदुक्तं न रक्षामि यदि त्वं पितृवत्स्थितः । मध्येवानुचितं कृत्वा पुनर्यामो दिगन्तरं ।
इति निर्भर्त्सनावाक्यजातभीतिर्नृपात्मजः । ततश्चिन्तार्णवे मग्नो युद्धश्रद्धामगाहत ।
अत्रान्तरे द्विजं तादृगवस्थं वीक्ष्य भूपतिः । मुरारातिरिव क्रुद्धो युद्धसन्नद्धतां दधे ।
शुक्रयोगजनामर्षपरीक्षणविचक्षणः । स्वपक्षरक्षणं क्ष्मापः पृष्ठीकृतरिर्व्यधात् ।
राज्ञः पृष्ठगतः सूर्य्यः खड्गाग्रप्रतिबिम्बितः । जयस्ते भवितेत्येव वक्तुं व्योम्नोऽवतीर्णवान् । १३५
कियन्तोऽमोति यावत् सोऽचिन्तयत्तावदग्रतः । अर्कदीप्तिज्वलच्चक्रद्युतिद्योतितभूतलं ।
निर्धनस्याहिमोद्योगपतङ्गटतुरङ्गमं । गणशो गणशो धावत् तत्सैन्यं समवैक्षत ।
कोऽन्यो वीरो हाज्यवानाद्यो राज्ञा वाग्जेन वा । गृहीतमर्म्मसैन्येन धैर्य्यान् कष्टमगम्यत ।
तत्र मर्म्मशिलाग्रश्मश्रुतालङ्कटा भटाः । स्वाङ्गदङ्गविदङ्गानां मात्यभङ्गिमदर्शयन् ।
ववर्ष शरधाराभिः स भूपकटकाम्बुदः । स्फुरच्चक्रास्त्रतडिज्ज्योतिस्तूर्य्यगम्भीरगर्जितः । १४०
अन्योन्यमिलिताः कांस्यघनत्वक्कठिनाघनाः । अन्योन्याघातसहना नदन्तः संहता बभुः ।
भटा नयन्ति मां युद्धं मां मा ताडयत द्रुतं । इतीव तारं दध्वान स्वानस्यानकदुन्दुभिः ।
पूर्वं मया प्रतीहारमुख्या गुरुलघूर्जिताः । रणे फलतया दृष्टा स्वेष्टसेवना इव ।
ततो भूपबलात् क्रुद्धौ धाविनौ भूपनन्दिनौ । ठक्कुरौ निरगातान्तौ वीरौ हस्सनहासनौ ।
सुवर्णसौहनयाद्या राजपुत्रा रणाध्वरे । शस्त्रज्वालानलालीढं जुहुवुः श्रीफलं वपुः । १४५
ते वीरभ्रमरास्तत्र रणोद्याने तदाभ्रमन् । स्वामिसाधर्म्यसिद्ध्याख्यकुसुमलम्पटाः ।
ते वीरमस्तकच्छन्ना रणभूभाजनं स्फुटं । भुक्तप्रस्य कृतान्तस्य कवलादिव रेजिरे ।
रणतूर्यस्वनस्तैस्तैर्जनकोलाहलैस्तथा । वीराणां सिंहनादैश्च शब्दाद्वैतमजायत ।

तत्सङ्कटे क्षणमिवैत्य नृपप्रसादं प्राप्ते क्षणे जहति ये निजजीविताशां ।
तत्कादिहस्तपरिरक्षणधर्म्मलक्ष्मा धन्यास्त एव कतिचिन्नृपसेवकेभ्यः ।

राजायादागतास्तीक्ष्णाः शरास्तत्पत्रपातिनः । स्वयं प्राप्नोति मां येव सखनन्तः समचोदयन् । १५०
ध्वजपताकाचला राजसुतस्यापि तु वायुना । सकम्पा रणभीत्येव पश्चाद्भागमशिश्रयन् ।
शस्त्रकृत्तस्फुरद्वीरशिरःकमलनिर्भरा । जीवनाश्या चलत्पत्रा नलिनी रणभूरभूत् ।
शौर्य्यमत्यद्भुतं दृष्ट्वा सैन्योत्कटकस्य च । पुनर्जातमिवात्मानं रणोत्तीर्णं नृपोऽविदत् ।

हत्वा सर्व्वदिनं युद्धं बलाद्भृत्यैर्निवारितः । हाज्यखानः सविभाणः समरात् स न्यवर्त्तत ।
भग्नं निजानुजं दृष्ट्वा पश्चात्तप्तो विविग्नधीः । अपजोऽथाबधीत्प्राप्तान् सर्व्वान्नाशार्थमेव भटान् । १६५
किमुच्यते नृशंसत्वं येन प्लूरपुराकरे । अन्धस्याथागतोमोहाद्विहतः पथिकव्रजः ।
यस्यां मन्दप्रभो भास्वान् गणैः सर्व्वैर्विलोकितः । दक्षिणस्यादिशस्तस्याः प्रवासी स नृपोऽभवत् ।
दुर्य्योधनार्पितरसा गुरुशल्यविष्टा भीष्मप्रिया परहतिं प्रति दत्तकर्णा ।
ये धर्म्मजातिविमनस्कतया कृपेच्छास्ते कौरवा इव रणे न जयं लभन्ते ।
अन्येद्युर्हतशिष्टांस्तान् स्वस्थानानीय पूर्व्ववत् । हाज्यखानः सानुतापश्चित्ते स्थितिं व्यधात् ।
खिन्नानाश्वासयन् कांश्चित् सच्चिन्तान् प्रतिपालयन् । अवदत् क्षुधया क्षीणास्तगाये सोऽनयक्षितां । १७०
मा बाधिष्ट सुतं कश्चित् मत्परो वानिविह्वलः । इति कारुणिको राजा न्यवर्त्तत रणात् द्रुतं ।
आमिथ्ये सुखितः सुतार्पितभरो भुञ्जेति दत्ताशिषा राष्ट्रेश्वरसेवकाः सतुरगाः सम्भिन्नता ये मया ।
तेऽमी राज्यशिरोषिवः सुतरता युद्धाय सम्यागता धिक्तां येन मर्य्यादितेन घृणयानर्थः स्वयं स्वीकृतः ।
इत्यादि विमृशन् राजा स्वपुरं दुःखितोऽगमत् । विरोधादायिनो निन्दन् सेवकान् विधिकर्म्मणा ।
सङ्ग्रामस्तवीरेन्द्र्रच्छिन्नमस्तकपङ्क्तिभिः । आनीय राजा नगरे सुखागारमकारयत् ।
इत्थं सेवकपैशुन्यात् पितापुत्रविरोधनः । समरे तत्र तद्वर्षे वीरलोकक्षयोऽभवत् । १७५
राज्यस्थितिप्रतिक्रमनिनीशिखोधोलोकक्षयोचितमहाभयधूमकेतुः ।
विप्रप्रमक्तखलधृकनिशान्धकारः शापः सुखस्य नृपतेः स्वजनैर्विरोधः ।
श्रीमानर्मिदनृपते तव नामवर्णाः पद्मेषुपद्मविविधन्ति सितस्मितेषु ।
प्राणन्ति बन्धुषु विरोधिषु पाण्डरन्ति हेवद्रुमन्ति कविपण्डितमण्डलेषु ।
इति पण्डितश्रीवररचितजैनराजतरङ्गिण्यां सम्प्रजिनायुद्धवर्णनं नाम प्रथमः सर्गः ॥
भूभृतो निर्गता प्रेमसरित् प्रोत्तानुजस्थलात् । प्रत्याहृता कियत् कालं षड्गुणायमसंशिश्रियत् ।
यत्स्नेहभागी सुदशाभिरामो भाति प्रदीपः समुपास्य पात्रं । आशाप्रकाशैकनिधेस्तदाराद्दर्प्पाभिधानेन विरोधनस्य ।
इदावादमखानाय नायकः स चिनेस्तदा । प्रसेथान् क्रमराज्यस्थानमुजोयास्थिरागतः । १८०
जगृहे स च विस्तीर्णं स्वहयामादिदेशगं । हाज्यखेधरस्थानीयं पानीयमिव वाडवः ।
ततः प्रभृति ज्येष्ठस्य कर्म्मोराज्ञनृपायगः । यौवराज्ये सुखं तद्भुजे पञ्चषः समाः ।
येषां सुखं वितनुते विधिरल्पहद्दा दुर्भिक्षदुःखमपि सन्ततं स तेषां ।
दृष्ट्वा विवर्द्धयति यानि तृणानि मेघस्तान्येव शोषयति भावितुषारभारात् ।
सर्व्वशस्यसमृद्धेऽस्मिन् देशे षट्त्रिंशवत्सरे । अकस्मादभवच्चैत्रे गगनात् पांशुवर्षणं ।
बभूव वर्षः षट्त्रिंशः सर्व्वहृष्णिकुलक्षयात् । भयकृत् सर्व्वजन्तूनां भारतादिति विश्रुतं । १८५
अभवन् पत्रपुष्पौघाधूलिधूसरताङ्गताः । भाविदुर्भिक्षपीडार्त्तजनचिन्तावशादिव ।
भविता वत्सरेऽमुष्मिन् दुर्भिक्षं पांशुवर्षणात् । इत्याख्यत् सुसरं दृष्ट्वा भूभुजा दैवविज्जनाः ।

षट्त्रिंशे वत्सरेऽतीते दुर्भिक्षातिप्रदोऽभवत् । एवमस्मादृशः साम्नो भीतिरित्युदभूद्धृदि ।
पपात मार्गशीर्षेऽथ मास्यपूर्ववदश्रमं । देशेऽत्र विलसत्कालिमानि प्रालेयवर्षणं ।
दुर्भिक्षदुःस्थितं लोकं कथं पश्यामि साम्प्रतं । इतीव भूरभूत्क्षमुखी हिमसितांशुकैः ।
छादिताः शालयः पक्वा हिमैःसममनोहराः । खलमूर्खसभामध्ये पण्डिताः सगुणा इव ।
कुल्यावेगाद्बुभुक्षार्त्तैः क्षपिताश्च क्षणे क्षणे । आशु दुर्भिक्षयक्षोऽत्र व्यधात् प्रक्षीणलक्षणं ।
प्रविश्य रात्रौ गेहान्तः क्षुद्रक्षुद्रोग्रपीडितः । हिरण्यादि धनं त्यक्त्वा भाण्डेभ्योऽन्नमपाहरत् ।
सर्व्वस्मिन् दिवसे रात्रावपि भिक्षुपरम्पराः । शरारवाविशन् देहे गेहे धान्यवहे तदा ।
धान्यवद्रूक्षमन्दिष्टकष्टकल्पकदम्बकाः । नीरसापूपभोगेनाप्यरक्षन् केऽपि जीवितं ।
पानीपालीव्रताक्रान्तकष्टदृष्टिहितभाजनः । चिराच्चिराक्षादरतः कोऽपि कोऽपि हतोऽभवत् ।
क्षीणा ग्रामेषु वास्तव्याः केचिदस्मत्तनाश्रये । शाकमूलफलाहारा व्रतनिष्ठा इवाभवन् ।
चिराजाद्वासरे चिञ्चा शाकं किमपि तण्डुलं । पक्वाऽन्ये केऽपि तक्रयोगादकुर्व्वन् प्राणधारणं ।
सर्पिर्लवणतैलानां तण्डुलेन महार्घता । क्षता सौचेन साधूनामिव सर्व्वोपयोगिनां ।
बहुधान्यकथानिष्ठो योऽभूत्पूर्व्वं पुरान्तरे । बहुधान्यकथानिष्ठस्तत्कालं स व्यनीयत ।
बन्धुजीवसदाक्रन्दो बन्धुजीवइवाभवत् । मन्दान् मन्दारयामास क्षुत्त्रस्तान् योऽन्यथा जिना ।
धान्यखारः कृतः पूर्व्वं दीनाराणां शतत्रयं । दुर्भिक्षतस्तदा सार्द्धसहस्रेणापि नापि सः ।
किमन्यत्कुवचित्राद्धे धात्रा निष्किञ्चनो जनः । अभवन्माण्डकुण्डल्य काञ्चिकेनापि वञ्चितः ।
यत्पूर्व्वमकरोद्देवो रसवद्व्रीहिशालिषु । मन्ये तेनैव शापेन भयमापत्प्रजद्रुमं ।
करुणाकुलितो राजा स्वधान्यैः पुष्यत प्रजाः । पोषयामास मासेषु केषुचिद्यावदाकुलाः ।
तावदस्यैव माहात्म्यात् शस्यसम्पद्व्यजृम्भत । सत्यव्रतानां भूपानां कावकाशश्चिरं शुचां ।
मन्येऽथ वारिधिर्भूपकारुण्यप्रयतक्षया । दौर्भिक्षदौःस्थ्याद्दुर्लोकं सञ्चाकमकरोत्तदा ।
पार्थिवोपप्लवे चौराः पन्थकारोऽभिसारिकाः । दुर्भिक्षे चैव तृप्यन्ति धान्यविक्रयिणो जनाः ।
अतः क्षुधामहार्घाऽपि पदार्था धान्यविक्रयात् । गृहीतास्तेऽन्यदा पूर्व्वमन्येन प्रापयन्नृपः ।
दुर्भिक्षभक्षिताशाटलोकदक्षः क्षितीश्वरः । धिया सरलदृष्ट्यास्ते लोकार्थं समादिशत् ।
तस्मिन्सम्वत्सरे राज्ञा कारुण्याकुलमानिनो । उत्तमर्णाधमर्णानां व्यवस्था विनिवारिता ।
चतुःषष्टिकलाः शिल्पं विद्या सौभाग्यमेव च । दुर्भिक्षोपप्लवे सर्व्वं तदाभुक्तिप्रयोजनं ।
पदवाक्यतर्कसवकाव्यकथाबहुगीतवाद्यमनृत्यकलाः । सुरतप्रपञ्चचतुरा वनिताः क्षुधितस्य नैव रचयन्ति सुखं ।
इति जैनतरङ्गिण्यां पण्डितश्रीवरविरचितायां षट्त्रिंशवर्षे दुर्भिक्षवर्णनं नाम द्वितीयः सर्गः ॥

तुष्टः प्रसादमतुलं कुरुते क्षणाद्यः क्रुद्धः प्रजासु कुरुते भयमप्रतर्क्यं ।
उन्मत्तपार्थिवपतेरिव हन्त धातोर्लीलाद्भुतन्त्वचरितं भुवि बुध्यते कैः ।

षट्त्रिंशवर्षदुर्भिक्षदुःखविस्मरणं जनः । न यावदकरोत्तावदष्टात्रिंशेऽपि वत्सरे ।

वृष्ट्या सह रजोवर्षमपतद्गगनाद्भुवि । उपादीयत शान्त्युत्थभाविदुर्भिक्षसूचकं ।
अथाचिरेण गर्जन्तो धृतचापा घनाघनाः । जनानुद्वेजयामासुः शरासारैरिवारयः ।
दृष्ट्युपद्रवसन्त्रस्ता वर्लिहरणाकुलाः । उत्थिता बुद्बुदव्याजाद्दृष्टा नागफणा इव ।
उत्पन्नध्वंसिनोभावान् करिष्याम्यहमस्थिरा । इति ज्ञापयितुं मेघा बुद्बुदानसृजद्भुवं ।
वृत्ताः सर्व्वेच पश्चान्तःपतद्वृष्टिस्खलज्जलात् । अम्बुविन्दूनिवामुञ्चन् हृदन्तो जलचिन्तया ।
वितस्तालेदरीसिन्धुक्षिप्रिकाद्यास्तदापगाः । अन्योन्यस्पर्द्धयेवोया ग्रामांस्तीरेष्वमज्जयन् ।
सविभ्रमाधृतावर्त्ता वाहिन्युत्थास्तरेचिताः । जवादधावन्नुत्तुङ्गास्तत्तरङ्गतुरङ्गमाः ।
अत्युच्चापातकल्लोलाजनिरस्य निरङ्कुशं । आसीदपथगं सत्यं तदा जलविजृम्भितं ।
स्रोतो जलस्य तत्कालेऽद्रिदृष्टविटपालिषु । केनोपदिष्टं तत्काले मूलोत्पाटनपाटवं ।
अपायपशुगोप्राणिस्वदधान्यादिहारकः । भयदोऽभूज्जलापूरः स म्लेच्छोऽपि सन्निभः ।
तदा सवरराज्यस्था विशोका शोकदा नदी । प्रदर्शयन्ती येवाम्बुर्भिर्विश्व विश्वपेश्वरं ।
स्नानात्पापहरी पूर्व्वमवाशोपगता नदी । इतीव तत्काले तूर्णं समस्तुर्गृहपङ्क्तयः ।
पुराणेषु प्रसिद्धा या विशोका शोकनाशिनी । तदाभूद्विपरीतार्था प्रजाभाग्यविपर्य्ययात् ।
येभ्यः प्रतिष्ठा प्राप्ता तान् दुःस्थान् द्रष्टुमसाम्प्रतं । इतीव तोये तत्काले समस्तुर्नगरे गृहाः ।
शिलादारुमयो सम्यक्स्तम्भीभूतचतुर्गृहा । चतुष्पादिव धर्म्मीया लोकानुग्रहक्षमौ ।
दारदायामपङ्क्षयद्द दर्शनाय विशाम्पतेः । थाचागतस्य लोकस्य सेतुबन्धइवाभवत् ।
वितस्तायां कृता जैनरुद्रनिः सरहेज्यपला । जलावेशान्तराश्मा भग्नाश्च नगरान्तरे ।
पादद्वयावशेषापि स्थापितार्थे भविष्यतां । पादद्वयं पूरयितुं समस्थेव सचोभुवां ॥ चतुर्भिः कुलकं ॥
क्रमराज्ये तदा कुर्व्वन् कल्लोलैराकुलं जनं । सहानप्रसरावेगादगाद्दुर्गपुरान्तरं ।
अन्यः सरोवरः कोऽपि पद्मनागसरोन्तिकं । प्रीत्या किमागतो दूराद्यं दृष्ट्वा विस्मङ्किरे ।
स्वयमुत्पाटयत्यस्मान् इवचत् सहसागतः । इतीव तत्र वेश्मानि चिक्षिपुः स्वजलान्तरे ।
दूरे समुद्रो मद्भर्त्ता कोऽयं हि समुपागतः । इत्थं वितस्ता सैव प्रतीपमगमत्तदा ।
सीमोल्लिङ्घता चलन्मार्गा पङ्कातङ्ककलङ्किता । स्थितिः कलियुगस्येव भूरभूज्जलपूरिता ।
तस्मिन्नवसरे धारासारं वर्षति वासवे । नौकामारुह्य भूपालो निर्गाज्जलचिन्तया ।
पश्यन् जलान्तरे मग्नां कृषिं शतशः शुचा । जनकारुण्यपुण्यात्मा विचचार पतिः स्वयं ।
दृष्टानि यानि घोषेषु गहनत्वान्न जातुचित् । स्थानानि तानि भूपालो नौकारूढो व्यलोकयत् ।
प्रतापश्चिखिनेवाथ शोषितोऽगाच्चिरैर्दिनैः । शान्तिं कूरो जलापूरस्य विस्तारे समागतः ।
अथाचिरेण तद्वर्षं दानोत्कर्षादिव प्रभोः । हर्षमत्यभवत् सर्व्वे पक्वधा शालिसम्पदा ।
प्रजाचन्द्रकलाहृष्टो कस्मोरेन्द्रपयोनिधिः । तूर्णं पूर्णात्मतां प्राप दयापीयूषभूषणः ।

इत्थं चिरविरामे वर्षे ज्येष्ठं निष्काश्य युक्तितः । हाज्यखानान्वितस्तुष्टो नगरं प्राप भूपतिः ।
शिशिरसमये योऽभूत्क्लिष्टश्चिरं धुतपत्त्रतिर्धरणिकुहरेष्वन्तः कालं निनाय मुदाकुलः ।
कुसुमसमये प्राप्योद्यानं विकासितोज्ज्वलं किसलयरतः सोऽयं भृङ्गः सुखं रमते पुनः ।
अस्मिन्नवसरे तुष्टाद्धाज्यखानो हृतं चिरात् । यौवराज्यपदं प्रापज्जनकाज्जनकोपमात् ।
पितुः प्रेमसमर्पितं प्राप्य स्वच्छं भक्तिपरायणः । हृदयाज्ज्येष्ठजन्मातु श्रीमान्काश्चीव कौस्तुभं ।
विनयविप्रदेवाग्रजानुमङ्कुचिताकृतिः । हकार इव मद्वर्णस्तोमः सर्वावधिर्बभौ ।
न तत्तीर्थं न सा यात्रा न सा लीला न चोत्सवः । तदाभूद्यत्र यत्रागाद्धाज्यखानान्वितो नृपः ।
यो नित्यं परितो वृतो गणशतैरत्यर्थमत्युज्ज्वलैः पुत्त्राभ्यां सहितो क्षितिक्षिगगतां नानाविलासान्वितम् ।
कालो गच्छति यस्य लास्यललितं गीतञ्च यच्छृण्वतः स्वस्थः कस्य न तस्य सर्वविभवः कैलासवासोऽभवः ।
इति जैनराजतरङ्गिण्यां आदमखाननिर्वासनं हाज्यखानसंयोगवर्णनं नाम तृतीयः सर्गः ॥

अत्रान्तरे मदनबन्धुरयाद्यसन्तः शृङ्गारसारकुमुदाकररोहिणीशः ।
मानान्धकारविनिवारणभानुमूर्त्तिः स्फूर्जल्लतालिललनानवयौवनश्रीः ।

ततश्चैत्रोत्सवे राजा पुष्पलीलाचिकीर्षया । ययौ मडवराज्योर्व्वीं नौकारूढः सुतान्वितः ।
तरण्डामण्डली राज्ञो वितस्तान्तरगा बभौ । प्रकस्येव विमानाली कथापटविभूषिता ।
स्वकीयराजधानीयोराजान्तिपुराङ्गतः । विजयेशादिदेशेषु मान्यं द्रष्टुमुपाविशत् ।
हरांशम्भुजं जेतुं यत्र राजसभानिभात् । सदानन्दो ऽभवत्कृत्वा बहुधा स्वं मनोभवः ।
सालङ्कारप्रबन्धज्ञाः सिद्धान्तश्रुतविश्रुताः । यत्रान्तःकरणोत्सुका द्रष्टारो गायना अपि ।
नानाग्रामगतास्वादस्वररागमनोहराः । यत्र गीतास्सञ्जातासमभुर्यन्त्रतयोऽपि च ।
कलाकलापवन्तामोन्मानमानमभ्रेऽप्यभूत् । रङ्गरङ्गद्गुर्विलोकोविद्याविधानसंश्रयः ।
प्रतितालिकतालादिबहुतालविभूषितं । तत्र तारा च नाराचसंस्थानं विदधुर्नटाः ।
उत्सवानामकामास्त्वं गायनी नयनोत्सवा । लास्यताण्डवनृत्यज्ञा न केषां रञ्जिकाभवत् ।
भावानेकोनपञ्चाशत्सङ्ख्यांस्तासामांश्च तावतः । दर्शयन्त्याबभुः पात्रस्था मूर्त्ताइव मूर्च्छनाः ।
यासां नृत्ये च गीते च त्वत्तोमेऽप्यधिकं सुखं । इति वादोऽभवच्छ्रोत्रनेत्रयोः प्रेक्षणक्षणे ।
पात्रीगानपिकध्वाने रङ्गोद्याने तदाद्भुतम् । दीपचम्पकमालास्तामधुपैः परिवारिताः ।
राज्ञि राज्यक्षणान्दृष्टुं नृत्यप्रेक्षागतैः सुरैः । दीपमालाच्छलाद्भुक्ता नूनं हेमाम्बुजस्रजः ।
जलान्तर्व्विम्बिता कापि दीपाली नागलोकतः । वरुणेन नृपप्रीत्या दापितेवाद्भुतस्तदा ।
ता दीपिता दीपमाला द्विधा रङ्गे चकाशिरे । दिदृक्षागतनागानां फणामणिगणाइव ।
किं राज्यालोकभावास्तटभुवि मिलिताः पूर्व्वभूपालजीवाः किं व्योमस्तारकौघः प्रमधरविमुखः सेवनायावतीर्णः ।
किंवा सिद्धाः सुरेन्द्रानिशहृविहरिवराः प्रेक्षणायोपविष्टाः किंन्वेतादीपमालाइति जनमनसामास्त दूरादितर्कः ।
साक्षादेष पुरन्दरः कविबुधाविद्याधरास्सेवका अस्य देवसभासदः सवपुषं सिद्धा अमी योगिनः ।

एताः प्रखरमोरकोत्कीर्णितगुणा गन्धर्वकागायनाः क्रीडावनिविहितवल्लीति जगदुः सर्वे जनाः प्रेक्षकाः ।
अङ्गारचारचूर्णादिगन्धकौषधयुक्तिभिः । रागैः शिल्पिकृता लीला कौतालोकमरञ्जयत् ।
तथा शोषधसम्पूर्णाज्ज्वालाद्रक्षणाघनाः । निर्यत्कुसुमसम्पूर्णस्वर्णवल्लीभ्रमं व्यधुः ।
सर्पाकारानलज्वाला निर्गता सलिलान्तरात् । चक्रे प्रेक्षकलोकानां चाम्राश्चर्यभयोदयं ।
नालकादुत्थिता व्योम्नि ज्वाला गोलकपङ्क्तयः । राजद्राजतरोचिष्का जीवज्ज्योतिष्कोपमा व्यधुः ।
रज्जुबद्धागमद्दूरं ज्वलन्त्योषधमालिका । आहृतये तथा गीतासाद्दृश्यो बहुरागताः ।
गतागतानि कुर्वन्त्यो दीप्तास्तत्कालदीपिकाः । प्रेक्षकाणां प्रिया दृष्टीरहरन्नद्भुतावहाः ।
अत्र पात्रीकरस्यापि ज्वलन्त्योषधमालिका । पुलोकोत्सुकमद्यार्णस्वर्णपुष्पश्रियं व्यधात् ।
वह्निक्रीडनलीलाया युक्तिरेन महीभुजा । शिक्षयित्वा स्वभाग्यं तास्ताः सर्वाः प्रदर्शिताः ।
पारसादपरोऽपीयोऽत्र दुर्लभो योऽभवत्पुरा । तद्युक्तिशिक्षया राज्ञा स्वदेशे सुलभः कृतः ।
प्रश्नोत्तरमयो श्लोकश्लेषभेदं प्रति या कृता । पारसीभाषया काव्यं दृष्ट्वा कुरुते न कः ।
ते शिल्पामतिकल्पिताश्च सदा सङ्गीतशास्त्रस्य सालङ्कारविचारचारुधिषणा काव्ये च तत्कौशलं ।
सत्काव्यश्रवणादरः स च नवप्रोत्पादनायोद्यमः श्रीमज्जैनमहीपतेर्बत सतैतस्यैव कस्याधुना ।
गुरुश्रीरल्लाकादरावस्य शिष्यः सर्वगुणाम्बुधिः । भूभुजश्चित्तमनयद्रागतानादिभिर्मुदं ।
खुरासानागतो मल्लाजादकाख्यो महीपतेः । वादनात्कूर्मवीणायाः प्रापातुलमनुग्रहं ।
मल्लाज्जमाननामापि श्लोकवाग्गेयकारकः । नारदीयमतस्यैव राज्ञोऽभूदतिरञ्जकः ।
तुम्बरीणाधरः सोऽहं सर्वगीतविशारदः । उद्दण्डरागगीतादिकौशलं समदर्शयं ।
अन्येऽपि जाफराणाद्या मया सह नृपाग्रगाः । तीव्रकान्दक्करान् रागानगायन्वीणया समं ।
गीतं द्वादशरागाढ्यं गायतां नः सभान्तरे । प्रीत्यैश्वर्यमिवापन्नास्तन्त्रीकण्ठोत्थिताः स्वराः ।
देशसंस्कृतकाव्यज्ञो राज्ञो निकटवान्यभूत् । पण्डितो नोत्थसोमाख्यो देशजैनचरित्रकृत् ।
देशभाषाकविर्योधभट्टः श्रीकृष्ण नाटकं । चक्रे जैनप्रकाशाख्यं राजवृत्तान्तदर्पणं ।
भट्टावतारः शाहनामेत्यपरस्यार्थपारगः । व्यधाज्जैनविलासाख्यं राजोक्तिप्रतिरूपकं ।
वीणातुम्बीरबाबाद्याः सर्वा स्तुत्येन भूभुजा । सुवर्णरौप्यरत्नौघैर्घटितास्ताः स्वकारिताः ।
तदाथ्यकाश्चर्यकात्यर्थसात्त्विकाभिनयोज्ज्वलं । नाट्यं दृष्ट्वा जनः सर्वश्चतुर्मुखमशंसत ।
इत्थं त्रिवर्गविद्राजा त्रिजगत्ख्यातपौरुषः । त्रियामास्त्रिविधैर्नृत्यैरनयत् त्रिदशोपमः ।
स्फुरद्दीपकलिलासहासं स भवनान्तरं । आसदन्तारकापूर्णं पूर्णचन्द्रमिवाम्बरं ।
ततो विमलकुण्डान्ते पानक्रीडां महीपतिः । कर्त्तुं प्रचक्रमे तत्र पुत्रमित्रविभूषितः ।
पितृप्रेमाद्भुतो सिको हाज्यखानोऽथ भक्तिमान् । वसन्तवर्णनाश्लिष्टां चाटूक्तिमवददिमाः ।

सङ्गीतनादनिपुणात्कलकण्ठभृङ्गात्कलानिलं सततिसाध्यविधा मदक्षम् ।
गीतमिथं नरपते किमु भेदितुं त्वां प्राप्तो वसन्त ऋतुचारणचक्रवर्ती ।

मेघाडम्बरमम्बरं यदि तदा निर्गच्छशोभावयं नित्यं तीक्ष्णकरेण तेन दिवसे तत्राप्यहो बाधिताः ।
स्वामी नः प्रथमप्रबोधदयितोद्यानादितीवागता उद्याने नरदेवसेवनपराः पुष्पक्रमात्तारकाः ।
पश्चात्तद्गकलङ्किता जलमया ये भोगिदेहार्पितास्तदृष्टे विलसन्तु पार्श्वविहगाः सन्मार्गविद्योतिताः ।
ये याताः स्वयमेव देव विलयं श्रीमत्प्रतापोदयादस्मिन् हर्षमये वसन्तसमये प्रालेयपूरा यथा ।
श्रुत्वेति भूपतिर्हृष्टोस्याक्षानाय सत्वरं । सौवर्णकर्णरीबन्धमप्रमेयं समार्पिपत् ।
यैर्यैः सेवा कृता तस्य प्राप्तादेशे विधाय्य तान् । पुरस्कारेण भूपालो धीवराद्याधिपान् व्यधात् ।
प्रेष्याद्याक्षेपनिर्व्याघमप्रांस्तान् सेवकप्रजान् । प्रमादपट्टपोतेन समुत्तीर्णान् व्यधान्नृपः ।
विदग्धीताङ्गिभ्यस्तस्मिन्वत्सरे नृपः । सुताप्यानन्दवाप्याह्व्यधात् कनकवर्षणं ।
दत्तमार्गोपचाराय्या राज्ञिया दर्शनागताः । प्राप्तपट्टपरीधानमानतुष्टा न केऽभवन् ।
तान्विलोक्य भवनोपवनादीन् पुष्पपूरपरिपूरितलोकः । स्वं सुवस्तुवराज्यनिवासान् प्राप जैननृपतिर्नगरं स्वं ।
इति जैनराजतरङ्गिण्यां पुष्पलीलावर्णनं नाम चतुर्थः सर्गः ॥

अत्रान्तरे सुतप्राप्त्या निर्विघ्नः सुकृतोद्यतः । कुल्यानवनवाः कर्थम् प्रतिहारमिर्कोऽभवत् ।
कविः श्रीजोनराजोऽयं स्वसन्दर्भान्तरेऽब्रवीत् । ग्रन्थविस्तारभीत्या तद्वर्णनं न मया कृतं ।
एकैवास्त्यमरावती ननु पुरी साक्षात्तनिर्माणका तत्राप्यत्र सदा विमानवसतिर्देवादिषु श्रूयते ।
सोऽभूद्भूमिपुरन्दरः पुरमतं कुर्वंस्तत्र सर्वतोऽयमेते निवसन्ति मानसहितास्ते भूमिदेवादयः ।
श्रीजैननगरे पञ्चदशेऽब्दे या कृता पुरा । राजधानी नवाप्युच्चा विद्धा देवगृहोपरि ।
तस्याः समीपे नृपतिस्त्रिंशेऽथ वत्सरे । दृष्टिकादारुसम्पृक्तं राजवासं नवं व्यधात् ।
यत्पृष्ठे स्वर्णकलशोभाति भातिमनोहरः । हेमपद्मदत्ताम्बकः शकेन श्रुतकीर्त्तिना ।
यद्द्वारार्यनियुक्तेभ्यस्तत्कर्म समादिशन् । आजीवं सोऽवसद्राजा राजधान्युच्छ्रितस्थितिः ।
यत्र वापीगता हंसा गीतध्वंसा स्वनच्छलात् । कुर्वन्तीव समीपस्था गायद्गीताङ्गिसंस्कृतिः ।
यत्र स्वर्वीकृताराति: सुपर्वाधिपतिर्यथा । सर्वाहः सुखगन्धर्वं सर्वगीरनयत सुखं ।
यदन्तरे सुविस्तीर्णः सर्वदर्शनमण्डपः । कार्यभित्तिमथाभाति व्यग्रसिंहासनोज्ज्वलः ।
यद्गर्भाद्युपसन्दर्भनिर्भरात्सूपसंस्थितात् । वातोऽपि सफलोद्यानः प्रातर्घ्राणसुखप्रदः ॥ कुलकं ॥
कदाचित्साहरं दुर्गं यात्रां द्रष्टुं गतो नृपः । राजवासं नवं कृत्वा जीर्णोद्धारमकारयत् ।
समुद्रकोटादारभ्य यावच्छ्रीदारकावधि । तत्तत्रनवावासवासवासयमन्दिरान् ।
जैननामाङ्कितान् ग्रामानकरोत्तगभूषितान् । उपतीरे महापद्मश्रीमत्पत्तनभूषितान् ।
तदन्नसत्रस्नानामर्थिनां त्रिपुरेश्वरे । उदरं मेदुरं सान्तोराजा लम्बोदरः कथं ।
अत्रसत्रे च्छितीशानिर्व्वराहक्षेत्रभूमिषु । अन्नु सर्वाशिनः सर्वेश्वमिष्टोऽपि याभवन् ।
सत्येभ्योनित्यहरिभ्यः सुत्राणामभयं ददौ । सत्यानामन्नसत्रेण वितस्तासिन्धुसङ्गमे ।
अर्थिनामतिहस्तानां श्रीशङ्करपुरे नृपः । अपेक्ष्य विदधे च्छायां स फलानि सतोऽवधां ।

अश्रमायां व्यधादाश्रमं यत्र नगरीपरैः । कथं न कुङ्कुमस्याभूत् गन्धभेदकदर्थनः ।
अच्छिन्नेनाश्रमत्वेन विजेयश्रवणाश्रिता । उदरे मन्दिरे सिद्धप्रणामो यत्नतोऽत्रिभिः ।
अश्रमश्रमविच्छिन्नं कृत्वा पुरपुराध्वना । प्रख्यातान्वे व्यधाद्राजा भारिकाणामिधारिकाम् ।
गुणी मूर्खोनिराधारः सा धारीयवनो द्विजः । नापेक्षि यत्नदत्तेन कश्मीरेषु स नाभवत् ।
श्रीपतिधाटजन्नुमुनिभिः पूर्वं रवेरन्वये जातमापि कृतः श्रमसिन्धुपथगा गङ्गेव जाता नदी ।
तेषां स्वार्थमभद्रशीनरपतिः सोऽयं परार्थे पुनर्देशेऽस्मिन् स्वधिया नदीर्नवनवा नाना पयः स्रष्टवान् । 410
नवीनोदारकेदारभूम्युत्पन्नप्रतिक्षणं । कूटधान्यफलैः पृष्ठादृष्टाः पर्वतसन्निभाः ।
धान्यकूटस्थलाशून्यं साभूद्राज्ञः कुचस्थली । प्राप्तोपाया प्रजा यस्याद्वृद्धिमापद्दिने दिने ।
दुर्लभाऽपद्रवानिष्टा यत्र यत्राभवत् क्षितिः । समुद्धरव शस्याढ्या तत्र तत्राकरोन्नृपः ।
न तत्स्थलं न कान्तारो न स देशो न साटवी । यत्र नानीय कुल्याः स्वाः स्वनामाङ्काः पुरीर्व्यधात् ।
न सा नदी न तत् क्षेत्रं न स ग्रामो न सा पुरी । न तत्स्थानं न यद्राज्ञा जैननामाङ्कितं कृतं । 415
यत्र यत्राभवन्निम्नाः प्रदेशास्तत्र कुल्यया । व्यधाद्राजा सरः पक्षिविमृष्टकूटाटभूषितं ।
धन्यावारिधरोधरोपकरणोत्सुकः सदा जीवनैर्यः सिन्धोः सलिलं निरर्थकतया सिन्धे निरुध्याम्बरं ।
कान्तारेष्वफलेषु केषु रुचिरं सुश्रव्यभोज्यं यतः साकेकोदितसर्वशस्यविभवो लोकः सुखी जायते ।
लोके जलदति ख्यातं यदगाधं सरोवरं । तस्य प्रतिष्ठाप्रस्तावाद्वर्णनं क्रियते मनाक् ।
आराजधान्या यद्वीथिं सुरेश्वर्याः सरोवरं । नौकाकटोऽपरसिन्ध्य व्योमेन्दुः सुनिर्मले ।
सरित्पथा यत्रान्तः शोभीना: पटसुन्दराः । पोताइवाद्यत पोतानाशः शाकुनिकान्विताः । 420
तिलग्रस्थागता यत्र नटिनी त्रिपुरेश्वरात् । मज्जन्ते मटाङ्कां यत्र द्रष्टुमिवोत्सुका ।
श्रीपर्वतोऽपि षट्कोणसीर्थस्नानफलेप्सया । स्वमङ्गानिष्कलाद्यत्र मज्जतीव दिवानिशं ।
शैवलन्ति द्रुमा यत्र कमठन्ति च पर्वताः । पुर्यस्तु नागलोकन्ति जलान्तर्यत्र बिम्बिताः ।
यत्र लक्ष्मणभूपालिकुलानि सरसीरुहां । तत्रैगन्ध्यमिवाघ्रातुमानतानीक्षते जनः ।
यत्राङ्कयुगलोत्प्रेक्षास्योदयद्वयमम्भ्रमात् । जाने याति रविः कुर्वन् प्रत्यब्दमयनद्वयं । 425
यत्र तीरे सुरेश्वर्याः क्षेत्रं भुक्तिविमुक्तिदं । वाराणस्यधिकं भाति तीर्थराजिविराजितं ।
विहारैर्यत्राऽरैश्च मठैः सुकृतकर्मठैः । आश्रमैरश्रमैरग्रवासैः स्वर्गोपमां व्यधात् ।
दीर्घशुण्डिकाकल्पैर्नृत्यन्तइव सुनृताः । दृश्यन्ते ये जनैर्दूराद्धेमच्छत्रवरोदराः ॥ सन्ध्ययुगलं ॥
यथा सिद्धपुरीनाम प्रसिद्धं नृपतेर्गृहं । कर्मसिद्धौ कुरुते सिद्धविमानावलिविभ्रमं ।
जीर्णा देवालया यत्र राजधान्यामगीकृताः । धृत्योन्नत्या निर्जस्त्वत्या सत्यार्थो भूभुजा कृता । 430
यत्र सर्वत्र णकेदरनिर्भेदोत्पन्नभूस्थली । सन्धारिष्युर्वरा राज्ञा सफला निर्मिता धिया ।
एकत्र देशे यत्रान्तःसत्वं श्रीजैनवाटिका । योगिनो पापपूजार्थं कृतं भोगाकृतस्वयं ।
मध्यपुष्करिणीमध्यं कान्तस्वादलिप्सया । यत्रैति द्विजराजोऽपि योगिचक्रान्तरे ध्रुवं ।

सिकन्धरधराभर्त्ता यवनैः प्रेरितः पुरा । पुस्तकान् सकलान् सर्व्वांस्तृणान्यग्निरिवादहत् ।
तस्मिन् काले बुधाः सर्व्वे सौस्मुलोपद्रवाक्लवात् । गृहीत्वा पुस्तकान् सर्व्वान् ययुर्दूरं दिगन्तरं ।
किमन्यद्विजयद्देशे सर्व्वे ग्रन्था मनोरमाः । कथावशेषतां याताः पद्मानीव हिमागमे ।
सुमनोवल्लभेनाथ राज्ञा भूषयता क्षितिं । नवीकृताः पुनः सर्व्वे मधुनेव मधुव्रताः ।
पुराणतर्कमीमांसाः पुस्तकानपरानपि । दूरादानाय्य वित्तेन विद्वद्भ्यः प्रत्यपादयत् ।
मोक्षोपायइति ख्यातं वाशिष्ठं ब्रह्मदर्शनं । सम्मुखादशृणोद्राजा श्रीमद्वाल्मीकिभाषितं ।
श्रुत्वा शान्तरसोपेतां व्याख्यां स्वप्नेऽपि सो नृपः । सन्मार्गदर्शिकाः कान्ताहावभावक्रियाइव ।
यो यद्भाषाप्रवीणोऽस्ति स तद्भाषापदेशभाक् । लोकेन हि जना नानाभाषालिपिविदोऽखिलाः ।
इति संस्कृतदेशादिपारसीवाग्विशारदैः । भाषाविपर्य्ययात्तत्तच्छास्त्रं सर्व्वमचीकरत् ।
धातुवादरसग्रन्थकल्पशास्त्रोदितान् गुणान् । यवना अपि जानन्ति स्वभाषाक्षरवाचनात् ।
दशावतारपूर्व्वोऽयग्रन्थराजतरङ्गिणीः । संस्कृताः पारसीवाचा वाचनार्थानकारयत् ।
बृहत्कथासारं हाटकेश्वरसंहिताः । पुराणादि च तद्युक्त्या वाच्यते निजभाषया ।
कश्चित्कृत्वा युक्तिभिर्व्वा चिरं धर्म्मशास्त्रं पवित्रं धन्ये चित्ते पटइव चितोरञ्जनं तत्कथां यः ।
आकर्ण्यान्ये प्रतिदिनममुं पर्य्युपासन्तकाः कन्याधारा अपि हृतगुणा गृह्णते तस्य किञ्चित् ।
नौबन्धनगिरेर्य्यात्रामाकर्ण्यादिपुराणतः । तीर्थयात्रोत्सुकं राज्ञः कदाचिदभवन्मनः ।
एकोनचत्वारिंशेऽब्दे पिष्टपक्षानुवासरे । यात्रादिदृक्षया भूपो जगाम विजयेश्वरं ।
नानावर्णांशुकच्छन्नैः प्रसकैः परिपूरितं । पुष्पाकीर्णमिवोद्यानमद्राक्षीद्रङ्गमण्डलं ।
यत्र वान्दरपालाद्या राजानो वीक्ष्य सद्वलाः । तदर्थं दर्शनायाता हर्षमभ्यभवन्निति ।
गगनं तारकापूर्णं दीपाढ्यं रङ्गमण्डपं । यथान्योन्यं तुलाश्लिष्टे रात्रौ कविबुधार्चितं ।
अमावास्यादिने प्राप्तैर्नानानागरिकामुखैः । शुशुभे शुभदं यत्र शतचन्द्रं भुवस्तलं ।
दीपवृक्षोन्नताश्चेऽपि यत्र रङ्गान्तरे स्फुरन् । दधे तारकमध्यास्तशशिकर्चर्योपमां ।
विजयेशादयात्याथ भूपः पुत्रद्वयान्वितः । पद्मामुत्तार्य दुर्मार्गं प्रपेदे वासरैस्त्रिभिः ।
दृष्ट्वा क्रमसरो विष्णुपादमुद्राकृतिं प्रभुः । पादप्रणामजानन्दमविन्दद्भक्तिसुन्दरः ।
सद्याश्च्युतेन गिरयः पतन्तोऽवरवत्कृतात् । अकुर्व्वन् कुशलप्रश्नं हरांशजमहोभुजे ।
कस्तूरीकुसुमश्यामोद्दामशाखाकारावनिं गिरेः । दृष्ट्वा तुष्टो नृपश्चक्रे योगीवेष्टां हरेस्तनुं ।
अथ नौकां समारुह्य धीवरैः पञ्चषैर्वृतां । धृत्वा मां सिंहभट्टश्च चचार सरसोऽन्तरे ।
गीतगोविन्दगीतानि मत्तः शृण्वतः प्रभोः । गोविन्दभक्तिसंसिक्तो रसः कोऽप्युदभूत्तदा ।
कृष्णप्रतिश्रुतामश्रुगीतनादसदावयोः । अनुगीतइवाचक्रे किन्नरैराजगौरवात् ।
क्षणं सरोऽन्तस्सरतो हिमद्युतिनिभाद्विभोः । भक्तिप्रीतैरिवोन्मुक्तं देवैः कुसुमवर्षणं ।
दृष्ट्वा सरोऽन्तरे श्वेताहिमाम्भोभ्रमणाकुलाः । तीर्थस्नानार्थकैलासप्रभृतिभ्रमिभ्रमं व्यधुः ।

एतादृशे कृते कार्य्ये कुतूहलात्प्रचोदिताः । अथ दौलुतचक्रस्य पतिताश्च शिलानिधि ।
चतुष्टदेवताचित्रशिलावर्त्मसमुत्थं । राजद्वारे निरीक्ष्यामभवद्विस्मयावहं ।
ईदृशं मन्दिरं केन कृतं पाषाणवर्त्मकं । इत्थं परस्परं लोकः कथयामास विस्मितः ।
तुलमूलाभिधे ग्रामे सम्यग्ज्ञानपरायणः । अभिमन्युरिति ख्यातः साधुरासीन्महातपाः ।
एकदा तद्गृहं गत्वा साधुं दौलुतचक्रकः । उवाच निर्भयं प्राज्यं कथं राज्यं भविष्यति ।
इत्युक्ते तेन सोऽवादीद्विचार्य महात्मना । वार्षिकं ब्राह्मणकरं तेन सिद्धिर्भविष्यति ।
इत्थं निवेदिते तेन साधुना लोकसत्तमः । उवाच वचनं सम्यक् शृणु वच्मि महामुने ।
तुलमूलाभिधं ग्राममर्पयिष्यामि तेऽधुना । विप्रदण्डं कथं लोकेऽवारयामि त्वदाज्ञया ।
इत्थं दौलुतचक्रेण वचने कथिते सति । अभिमन्युर्बभूवाशु रोषव्याकुलमानसः ।
तेनाद्य ब्राह्मणकरो यदा नैव निवारितः । साधु दौलुतचक्रं सं शशाप रोषसंयुतः ।
समुद्रमध्यमासाद्य चन्द्रार्कौ ते पतिष्यतः । इति शापप्रनष्टश्रीर्बभौ दौलुतचक्रकः ।
मासमेकं कृते राज्ये रिंचनाभिधभूभृता । जयाह तत्पदं लोभाज्ज्ञात्वा तस्य स्वयं ।
तत्प्रतापाग्निदग्धेषु सिक्ताः स्त्रीनयनाम्बुभिः । कटेषु वैरिणां नित्यमुत्पद्यन्ते तृणाङ्कुराः ।
हृद्व्यथावनारीणामनुवर्धाकुलेष्वपि । ज्वलत्यपूर्वानिबेषु यत्प्रतापदवानलः ।
अथ दिग्दाहभूकम्पान्समीक्ष्य पृथिवीभृता । पृष्टावाक्यमिदं प्राङ्गणाकागणनापराः ।
देशेऽस्मिंस्तव सञ्चरिष्यति महद्युद्धं समृद्धं प्रभो सङ्ग्रामेष्वपि निःसरिष्यति महावेगा च रक्तापगा ।
लोकानां प्रचरिष्यति प्रतिपदं दुर्भिक्षपीडाथवा नक्षत्राचारविचारणेन धरणी भूपाल भोः पालय ।
अथाययौ स्वसेनाभिर्बलैर्हैदरसेवकः । करभट्टारनामासौ भूयो देशजिगीषया ।
निशम्यैतादृशीं वार्तां गाजशाहिर्भिर्निर्भयो । तुरङ्गमसुरोद्दृप्तचूर्णीकृतमहीधरः ।
स समाश्रित्य भूपालो देशं राजविराभिधं । पदातिमार्गलोकानां समराय समादिशत् ।
राजविराभिधे देशे मिलिते राजकद्वये । भीतिर्बभूव लोकानां हिराजानामसङ्गिनां ।
रणे विलोक्य सर्व्वासां पत्तीनां गतिचातुरीं । बभूव वायुवत्कम्पो भीतिचञ्चलमानसः ।
करभट्टारो दृष्ट्वाथ काश्मीरशरवर्षणं । स क्रुद्धः करभट्टारः पत्तिलोकविलोकनात् ।
अन्धकार इव प्रातः सावादहणदर्शनात् । तस्मिन् पलायिते देशाभिस्रवौ सकलो जनः ।
सर्वे विनिर्गते देशात् कुटुम्बमिव तत्क्षणं । तदाश्च वद्धं तेजः करैर्जज्वाल मेदिनी ।
विस्ताय प्रतापस्य ग्रीष्मकाले रवेरिव । अथान्तरे महारोषजर्ज्जरीकृतमानसाः ।
हुस्न चक्रादयो लोका ययुस्तुर्नगरान्तरं । महाश्रिवपुरे दुर्गं कृत्वा तिष्ठन्तु वैरिषु ।
दिद्दामठाभिके तस्थौ भूपो युद्धचिकीर्षया । युद्धेऽस्मिन् वाटके स्वामिमहाश्रिवपुरस्थयोः ।
वितस्ताकेलयोर्मध्ये वारयन्तीव या बभौ । नदीमुल्लङ्घ्य भूपालो युद्धं कृत्वा महत्तरं ।
सितानदीप्रवाहेषु दुर्भेद्यक्रममकारयत् । गते बहुविधे काले गाजीचक्रप्रचोदितः ।

आयथै। मुग्गुलस्वामी श्रीकश्मीरजिगीषया । शाहमर्द्दोजमाजीति नाम यस्याभवद्भुवि ।
स काश्मीरान्तरं प्राप बहुलोकसमन्वितः । तत्सदागमनं श्रुत्वा सैन्येन महता वृतः ।
आससाद स भूपालः परिहासपुरान्तिकं । कृते बहुविधे युद्धे सकले सैनिके हते ।
शाहमर्द्दोजमाख्यो स चचाल निजवर्त्मना ।
बभूवुः समरे तत्र यवनाविगतासवः । यमस्तेषां रक्षोघ्यान्मेनाधिगतासवः ।
आनीतैः समरस्थानाद्भूपालोनगरान्तरे । म्लेच्छमुण्डस्थामास मृतमानवमस्तकैः ।
एकदा मन्नवर्यस्य बालस्याक्रुष्यतः फलं । कृपां विहाय भूपालः करं चिच्छेद तत्क्षणं ।
चौरं मुष्णाति कस्मिंश्चिन्मीनाम् ग्रामनिवासिनां । सत्वाज्जहार भूपालः स्वर्णमुद्रासतद्वयं ।
मातुलं स्वं जिघांसन्तं यौवनस्थं प्रतापिनं । घाताज्जघान भूपालः स्वसुतं चैदराभिधं ।
निहते स्वसुते तेन यौवनस्थे दुरात्मना । यतः पुत्रोऽप्यनेनेति हाहाकारोमहानभूत् ।
अष्टादशाभवंस्तस्य युवराजस्य मन्त्रिणः । स्तताञ्जघान भूपालस्तस्तदैव राक्षसः ।
एकदा कुष्ठरोगेण बहुलेन महीपतिः । बभूव विगतोत्साहोराहुग्रणेनेव चन्द्रमाः ।
कण्डुः कीटकृता देहे पूयशोणितनिर्गमः । नरके यानि चिह्नानि तान्यासंस्तस्य जीवतः ।
कीटाञ्जघास मांसानि पीत्वा तत्पूयशोणिते । नरकादधिका पीडा बभूवैतस्य जीवतः ।
हा तात मित्र हा पुत्र मम कष्टमुपस्थितं । इति क्रन्दितमाकर्ण्य कोनाभूद्दीनमानसः ।
इति स्पष्टमहाकुष्ठनिपीडितकलेवरः । सह संसारलोभेन प्राणांस्तत्याज भूपतिः ।
मृतस्य तस्य भूपस्य भ्राता होसैनखानकः । निखन्य भूतले सम्यक्कुर्य्यांस मृतसंस्कृतिं ।
अकस्माद्भूतलं तत्र जज्वाल नरकाग्निना । धूमेनोत्पतता कुर्व्वं दिशानां अनसन्ततिं ।
निःश्वासइव कालेन पीड्यमानस्य भूभृतः । उत्तस्थौ सर्व्वतोधूमः सर्व्वलोकविलोकितः ।
रात्रौ तद्भूतलं गत्वा पीड्यमानस्य भूभृतः । शुश्राव सकलोलोकोयमकिङ्करताडनं ।
तेनोप्तं यादृशं वीजं तादृशं लभ्यते फलं । इत्थं परस्परं लोकावदन्ति स्म सविस्मयः ।
वर्षद्वयान्तरे कृत्वा राज्यं पापमलीमसं । कुष्ठरोगविशीर्णाङ्गोगाजशाहिर्ममार सः ।
हा कथं तेन भूपेन कृत्वा पापमहर्निशं । अल्पकालप्रभुत्वेन नाश्रिता बहुवत्सराः ।
स्वर्य्याते नृपतौ भ्राता राज्यं होसैनखानकः । अयाहास्ते गते चन्द्रे पूर्व्वाद्रिमिव भास्करः ।
राज्यमाश्रित्य भूपालोदुर्व्विचारदवानलात् । प्रजानिर्व्वापयामास पीयूर्षोववतोयदः ।
यदा प्रत्यर्थिदानेन लक्ष्मीतेन वशीकृता । तदा प्रत्यर्थिदानेन कीर्त्तिर्दूरतरं गता ।
चिक्रीड सह कान्ताभिर्भूपः पीतमवासवः । सुखं तत्सदृशं स्वर्गे स चकार न वासवः ।
तद्गृहे गुणबहुले लक्ष्मीरासीदनन्यगा । तां विलोक्य तथाभूतां कीर्त्तिर्भीत्येव साचलत् ।
तदीयच्छद्मामाश्रित्य प्राप्तसर्व्वमनोरथः । याचकोनाभवत् भीतोदानेन दायधाचकः ।
सततं यस्य पादाब्जसमनान्यसमस्तकः । अवाप परमां लक्ष्मीं लोकः शोकविवर्जितः ।

तस्मिन् रक्षति कश्मीरदेशं नित्यं विचक्षणः। अभूत्पुष्पफलोत्पत्तिपरिपूर्णा वसुन्धरा।
दुर्भिक्षचौरराजक्षोभभये तेन निवारिते। अमंस्त स्वर्गवद्रम्यं लोकः कश्मीरमण्डलं।

यदा यदा तेन कृतो विचारश्चौरस्य तदा प्रचारः।

अभून्न दानावसरे विकारस्ततोऽभवत्तस्य यशःप्रकारः।

खानिजमाननामाभून्मन्त्री तस्य महीभृतः। स निर्गते महीपाले चचार नगरं क्षणात्। ४८५
[ येनापराधः कृतस्तान् निवेशिकान् राजा मुमोच। प्रत्यहं मनश्चोलोकान् जघान। अल्पा
पराधेऽधिकं दण्डं कृतवान्। एकस्य यामिन्यापराधि सति मनुष्यमामुमोच। सुपात्रे कि
मपि न ददौ कुपात्रेषु समार्पयत्। स्वसेवकं जैतानामानमादिदेश। मत्पुत्रान्न्यतां। स
सेवकस्ताद्राजपुत्रं न जघान। ततो राजपुत्रं देलावरखानो जघान लोकास्त्वपश्यन्। हा पाप
राजन् परलोके का गतिस्तव भविष्यति। त्वत्सुतस्यापि कृपा न जाता। तस्यैवकानपराधरहिताम् किमवधीः। ]
तदीयसैन्यमागत्य नाशयामास तत्क्षणं। जैनोल्लनृपतिः प्रातरन्धकारमिवांशुमान्।
सुखं बहुविधं तेन कृतं नित्यं महीभृता। संरक्षता विधानेन प्रजाः सन्तानविच्युताः।
विरोधि कृतबुद्धीनां वैरंसंकल्पचेतसां। मल्लदस्यानकादीनां चकर्ष नयनानि सः।
निर्गतानां मही जेतुं भूपः सम्प्राप पर्वते।
एकदा शारिकास्थाने मिलिते सकले जने। वसन्तदिवसे राजा स चकार महोत्सवं।
कुङ्कुमागुरुकर्पूरचन्दनाद्यनुलेपनैः। रराज सकलो लोको वसन्तदिवसे तदा। ४९०
विहितोऽत्रतदुर्लक्ष्यलक्ष्यभेदाय भूपतिः। निजसेवकलोकाय गजवाजिधनं ददौ।
भूयः श्रीपञ्चमी तत्र दिवसे पृथिवीपतिः। ददर्श मिलितं लोकं ज्येष्ठरुद्राख्यपर्वते।
कश्चित् कान्तां प्रतिकृतगौरीमञ्जरीं जिघ्रति स्म पीतोऽन्यस्त्रीरक्षितसमये व्याकुलः कश्चिदाभीरः।
पीत्वा कश्चिन्मधु समभवत् पुष्पसम्भूषिताङ्गः श्रीपञ्चम्यामिति कृतसुखो निर्भयो सर्वलोकः।

वराङ्गनानां नवसुन्दरीणां विलोक्य साश्चर्यजनृत्यगीतं।

ददौ समासाद्य नवीननायं सुवर्णदुग्धं पवनासि राजा।

अथापस्मारदोषोऽस्य प्रबभूव महीभृतः। कलङ्क इव चन्द्रस्य निर्मलस्य शनैःशनैः। ४९५
जैनोल्लभाद्यमीतांशो यशोऽपस्माररात्रुणा। दुर्निवारान्धकारेणोज्जनोभीत्याकुलोऽभवत्।
जैनोल्लपृथिवीपालो राज्यं संप्राप्य सादरे। कुबेरस्यादिव स्वीयं यथा दानसमर्जितं।
सप्तवर्षेष्वतीतेषु नित्यं सुखमयेषु सः। स्वर्गेऽयं कीदृशोऽस्तीति द्रष्टुमिव ययाविव।

निर्मापितापि द्रविणव्ययेन यत्र याता क्षितिपस्य सर्वाः।

आराधितापि प्रभवं प्रभिन्न कीर्त्तिः कथं तिष्ठति लोकमध्ये।

आलेख्यानार्पिते राज्ये तुतुषुः सकलाः प्रजाः। उदयाद्रिस्थिते सूर्ये प्रातः कमलिनी यथा। ५००
कश्मीरदेशमालोक्य सम्यग्भूपालपालितं। निनिन्द मुदितो लोकः स्वर्गं देवेन्द्रपालितं।

विचारे विहिते तेन दुर्जनाविजयं ययुः । उलूका इव पूर्वाद्रिं प्रयाते दिवसेश्वरे ।
तस्मिन्नवसरे चौरा गुप्ता आसन् भयाकुलाः । मध्याह्नकाले सम्प्राप्तं बिलमग्ना इवाखवः ।
प्रत्यर्थिभ्योऽददो दानं महाधर्मितिसंयुतः । चकार चपलाश्चित्तं मार्गणाश्रितानां सदा ।
यत्सर्वेषां दयाचक्रे भीतानां धरणीपतिः । अतः शंकादयाचक्रे प्रजाः सञ्जातकौतुकाः ।
अकस्मादरुणीभूतं बभूवाथ दिशां मुखं । आविर्दुर्भिक्षसंहाररौद्रकालानलोपमं ।
उत्पातलक्षणोपेता चकम्पे च वसुन्धरा । दुर्भिक्षमारीदहनादवमर्थैव साभवत् ।
मार्गे मार्गे तदा तस्थुरत्यूनाः शवपङ्क्तयः । दुर्भिक्षकालमत्तस्य यमस्य पटहा इव ।
सुवर्णरजतादीनां नाभूत्तत्र प्रयोजनं । किञ्चपाकं सुदुष्प्रापं चिन्तारत्नमिवाभवत् ।
काचिच्च स्त्रिया भर्तारं द्वेषिणी स्नेहवर्जिता । जघास भोजनं गूढं पुत्रे दूरे निवारिते ।
बुभुक्षाक्षपिते पुत्रे कन्ययापि कृतार्थना । चकार भोजनं नारी प्राणांस्त्यजति भर्त्तरि ।
एकदा बहुभिर्लोकैराजहारि मृते गजे । अर्थपूर्विकया लोभान्मांसं नीतं पृथक् पृथक् ।
एकदा कन्दुकारेण हत्वा नापितबालकं । पक्त्वा भक्ष्यप्रसङ्गेन विक्रीतं मानुषामिषं ।
विहाय स्वगृहं लोकाः पुत्रदारसमन्वितं । देशान्तरं तदा जग्मुः प्राणत्राणसमुत्सुकाः ।
तस्मिन्नवसरे वायुर्बभूवोत्पाटितद्रुमः । कल्पान्तकालसंहारभीतलोकविचारितः ।
वायुनोत्थापिते धूलिराशौ वलितभास्करे । मध्याह्नसमयः साक्षाद्धूसर इवाभवत् ।
वायौ चलति चाकस्मात् महाग्निर्वनोत्थितः । अग्निर्जज्वाल सम्पूर्णेऽस्मिन्निव निर्दहन् यथा ।
वितस्तातीरमुल्लङ्घ्य समुद्रामठसंयुतं । ददाह नगरं सर्वं वायुनानुगतोऽनलः ।
ज्वलन्ती नगरी रेजे वितस्ताजलबिम्बिता । जलान्तर्मज्जन्त्येव दाहनिर्वाणहेतवे ।
धूमेनोत्पातिता व्योम्नि तारकापिहिता अपि । अनेकाङ्गाररूपेण बभूवुर्दिग्गणा इव ।
धूमेन पिहितास्तारास्तत्र व्योमनि तावभुः । ज्वलन्तं वह्निमालोक्य भयेनेव पलायिताः ।
नववर्षार्जितान् भोगान् भुक्त्वा स धरणीपतिः । दुर्भिक्षपीडाविश्रान्तिं कर्तुमिव ययौ दिवं ।

तस्मिन् प्रयाते त्रिदिवं नरेन्द्रे राज्यं गृहीते च तदीयपुत्रे ।
अब्दालखानोऽपि चकार कोपं पितृव्यरत्नस्य महीभृतोऽपि ।

यदापि म्रियते भ्राता भ्राता गृह्णाति तत्पदं । इत्थं कुलक्रमोऽस्माकं कथं राज्यं प्रयच्छति ।
इत्युक्त्वा प्रचिते दूते तेनाब्दालाभिधेन तत् । युद्धं योधाभयाकारं बेकच्छरपुरेऽभवत् ।
अब्दालखानको युद्धं कृत्वा हत्वारिसैनिकं । कुतूहलेनेव दिवं ययौ भ्रातृदिदृक्षया ।
योधोभभूपती राज्ये गृहीते प्रददौ धनं । प्राक्तनाः कर्णमात्राक्षमुक्ताश्चिक्षारयन्निव ।
अथ सर्वमहायोगदुर्विवेकेन चोदितः । तस्य नोमारखानोऽगाद्दूरं युद्धचिकीर्षया ।
सद्रुखानमामाभूद्योधोभस्यापसेवकः । युयुधे सह तेनैव तदा दिद्रामठान्तिके ।
महानीलरजोराशिमिश्राम्बरनिर्मूर्च्छिताः । जगज्जुर्दैवनाशाय आशानियुक्ता इव ।

निःशोभा श्वभ्रलोकास्ते मल्लुरखानके । यथा दिनकरे याते सार्धं पद्माकरा इव ।
चलन्तः शादिनोऽथासन् वितस्ताजलबिम्बिताः । विशन्त इव पातालं तत्पराभवशङ्कया ।
सायदखस्य सार्द्धस्य भोगान् भुक्त्वा स भूपतिः । जगाम खशलोकानां मार्गे पर्वतदुर्गमं ।
राज्यं सोमारखानेन श्रिते योसोभभूपतिः । चचालोदयति प्रातः सूर्ये चन्द्र इवाग्रगः ।
समस्तपृथिवीपालव्यत्तालदीनभूपतेः । चरणं शरणीकर्त्तुं ययौ योसोभभूपतिः ।
सोमारखानलोकस्य शनैर्वैरमजायत । परस्परविमर्देन वनस्येव दवानलः ।
सपादस्येव मासस्य सुखं कृत्वा स भूपतिः । उवास देवतागारे सुलोकाभिरक्षितः ।
सोमारखानं निर्जित्य चक्रहैदरकादयः । राज्ये निवेशयामासुः श्रीमल्लङ्करचक्रकं ।
तस्मिंल्लङ्करभूपाले भूमिं शासति सर्वतः । बभूवोपद्रवो नित्यं सिंहेभ्यो ग्रामवासिनां ।
रात्रौ घोरः प्रतिग्रामं व्याघ्रद्वारादिनिर्गतः । निहतः स स सिंहेन पिशाचेनेव भक्षता ।
व्यत्तालदीनभूपालपाददर्शनहर्षितः । आययौ वत्सरे याते श्रीमान् योसोभभूपतिः ।
श्रीमत्स्वय्यपुरग्रामं वितस्ताजलदुर्गमं । शिश्रिये स महीपालश्चन्द्रवाद्रिमिवांशुमान् ।
तदा लङ्करभूपालो निर्ययौ नगरान्तरात् । चलच्चलोकसंयुक्तः सिंहो गगनमुत्पादिव ।
ज्ञात्वा स्वय्यपुरग्रामं वितस्ताजलदुर्गमं । ययौ हैदरचक्रोऽथावन्यमार्गेण सत्वरं ।
ज्ञात्वा योसोभभूपालस्तमद्रिपुरिवेष्टितं । वितस्ताजलमुत्तीर्य युयुधे लङ्करेण सः ।
विधाय तुमुलं युद्धं सर्वप्राणिभयावहं । भग्नो लङ्करखानस्य समागाच्चालसेरकः ।
नष्टे लङ्करभूपाले निर्गतैर्निजसैनिकैः । अवर्द्धत स भूपालो नदैरिव महार्णवः ।
लङ्करखानो योसोभखानपादमशिश्रियत् । सभ्रातरमसौ सोऽपि निर्गमकरोत् क्षणात् ।
श्रुत्वा हैदरचक्रोऽसौ योसोभनृपचेष्टितं । शिश्रिये काशूलं देशं पुनर्युद्धचिकीर्षया ।
युद्धं योसोभभूपालचक्रहैदरयोरभूत् । वनेषु शोणितासारदूरीकृतदवानलं ।
व्यत्तालदीनभूपस्य ययौ हैदरचक्रकः । सकाशं वसुभिर्हीनो भास्करस्येव चन्द्रमाः ।
शशास चलिते तस्मिन् देशं योसोभभूपतिः । अन्धकारे गते दूरं पद्माकरमिवोष्णगुः ।
ववर्ष वासवः सम्यक्ववौ वायुः सुखावहः । ततापतपनः साध्वस्मिन् रक्षति मेदिनीं ।
दूरीकृता तेन चपला वसुधामिमां । ववृते गुणवृद्ध्येव लक्ष्मीरामोदनन्दना ।
गुणेष्वसत्स्वपि तस्य राज्ञः स एव दोषः प्रकटस्तदाभूत् ।
यच्चञ्चलाप्रकृति तेन लक्ष्मीः स्थिरापि कीर्त्तिश्चिरिता सुदूरे ।
सञ्ज्ञामागुणिनैरोति प्रसिद्धिं परमां गतः । साम्यरोगः कथं तस्य नृपेण गुणिवञ्चना ।
हर्षभखानमसुरेषु तेषु दृष्टेषु योसोभमहीधरेण ।
निष्कृष्य चक्षूंषि विशेषरोषात् कश्मीरदेशे विहितो विहारः ।
व्यत्तालदीनभूपालसेवनार्थं जलोद्भवः । याकोभराजपुत्रोऽपि प्रहितस्तेन भूभुजा ।

तत्र रेजुः पताकाभिः पटमण्डपपङ्क्तयः। कश्मीरपर्वतामोक्षसमुच्छ्रितमुखा इव।
उद्यमी च रणोत्साहिसङ्ख्याता सेनाप्रचारतः। येन नभसि सूर्यस्य राजश्रीतिर्यथाभवत्।
मार्गस्थानां हि धूलीनां यथा सङ्ख्या न विद्यते। तथा सङ्ख्या न सेनायाः पदातिगजवाजिनां।
दिनैः कतिपयैः सेना दूराध्वमलिनीकृता। चन्द्रभागानदीं प्राप चकोरीन्दुकलामिव।
यत्र स्नानेनि जुष्टाच पपुस्तोयञ्च निर्मलं। तडागदूषितालोकाः सुखं चक्रुर्यथेप्सितं।
स्नानपानजलक्रीडाभिर्नितम्बजलमानवे। चन्द्रभागातटे दूरादुपद्रवः कृतोऽभवत्।
स्नानमुक्ताङ्गजालचर्यपि दन्तकरेणुकान्। अन्यदन्तिकृतचाञ्चल्यभीत्याकुलोऽभवत्।
चन्द्रभागां समुत्तीर्य दिनैः कतिपयैरपि। पर्वतस्यान्तिकं प्राप सेना काश्मीरदेशगा।
पर्वतेषु पदातीनामारोहणावरोहणैः। जानुगुल्फपदातीनामवसादो महानभूत्।
क्वचित्तोये धारा क्वचिदपि जलं दुर्लभतरं क्वचित्पाहि वाणिः क्वचिदपि शिलाताडनभयं।
क्वचिच्छीतं नित्यं क्वचिदपि सदोष्णाग्न्युपगमं गमस्थाने पन्था भवति यममार्गोऽपर इव।
दुष्टहिकोमलीभूतं तासु पर्वतभूमिषु। नवचामाङ्कुरं अनुष्टुपवारणवाजिनः।
मध्यदेशीयलोकानां पश्यतां पर्वतस्थितिं। पृच्छतां चामहृष्टानां चमत्कारो महानभूत्।
तास्ताः सङ्कटभूमयः सुगमतां नीताः शिलापङ्क्तिलो ते कुञ्जकुञ्जराः किल भटैर्नीतिं तदा प्रापिताः।
लोकः कुञ्जमतिप्रकाशमकरोत् ग्रामं यतो सेङ्कमं सेना पर्वतमस्तके समभवत् कल्पान्तकालोपमा।
चक्रवर्त्तिप्रभावेण तस्तैनादर्शनेन च। पर्वतीयजना चायम् भयाचकितमानसाः।
कानागुपायनीकृत्य मातुलुङ्गफलानि च। पर्वतीयजनास्तत्र कामिनखानमाययुः।
यदङ्गीमचरोऽपि मांसमूकलैः संदधाने मानवैर्यत्कथितलक्षितोऽपि वडिशैर्मस्तोऽपि चावध्यते।
यत्पक्षक्षयसमर्पणेन कृतिभिर्दूरात्परार्णीयते तद्येन वशीकृता जनपदाः कामेनगाथा धनैः।
देदरपक्षनामाभूद्याकोभे वैरतत्परः। स गैयन्दर्शनार्थे तत्स्थानकामिसमैनिके।
अथान्तरे च काश्मीरमार्गरक्षणतत्परः। वङ्गामनायकोऽप्यासीद्याकोभभयविक्लवः।
वङ्गामनायकोलोकं स्थापयित्वा बहिः स्वयं। जगाम केवलश्चया खानकामिसमैनिकं।
तत्र कामिनखानोऽपि सर्वकार्यविचक्षणः। चकार सत्कृतं मानं बहुराभरणैर्धनैः।
अथान्यैरपि याकोभसङ्गस्य समर्पितं। राज्यं हाबीनखानस्य पश्चान्निलगिरिस्थितैः।
कामिनखानमायान्तं देशान्तरव्यवस्थितं। मध्ये हाबीनखानस्य राज्यं श्रुत्वा चुकोप सः।
अथ याकोभभूपालः प्रस्थानं कृतवान् रणात्। हाबीनखानं निर्जयंस्य पश्चान्निलगिरिं प्रति।
याकोभप्रहितं सैन्यं प्रभुसेवापराङ्मुखं। साकं हाबीनखानेन सन्धिं चक्रे बहुच्छया।
श्रुत्वा याकोभभूपालो मिलितं निजसैनिकं। निन्दां चपलचित्तानां सेवकानाञ्चकार सः।
हरन्ति सम्पत्तौ वित्तं विपत्तौ विद्विषन्ति च। सेवकाः सन्ति दुर्धीस्नास्त्वमानतु तस्कराः।
मंत्रचक्राभिधं काश्मीरमध्यस्थं। मोचयित्वा स याकोभः काष्ठवाटान्तरे ययौ।

थाकोभभूपमधिकृत्य निरस्तवीर्य्यं ते सेवका न विदधुर्बहुमानसेवां ।
चिन्तामणिं लुठितहस्ततलाभिघातैः खेलन्ति वानरगणा गुलिकाक्रमेण ।
थाकोभे चलिते सैन्यं विससार पृथक् पृथक् । हारसूत्रक्षये छिन्ने मौक्तिकं विद्रुतं यथा ।
काष्ठवाटान्तरे केचित्केचिन्नगरवासिनः । आसन् केचिद्विदेशस्थाः केचिन्मुग्गुलमन्दिरे ।
हुसैनखानादाहृत्य राज्यं पर्व्वतमस्तके । जग्टहे शंशचक्रेण कासिमाभिधशङ्कया ।
कासिमखानमायान्तं निशम्य कृतनिश्चयः । जगाह शंशचक्रोऽसौ पर्व्वतं जनदुर्गमं । ७४०
स्वल्पलोकसमायुक्तः शंशचक्रोऽभवत्तदा । कासिमखानकोऽप्यासीद् बहुलोकसमन्वितः ।
पुरस्कृत्य स कासिमखानोहैदरचक्रकं । चकार तुमुलं युद्धं सुग्रीवमिव राघवः ।
काश्मीरसैनिकं सर्व्वं चक्रहैदरदर्शनात् । चचाल रात्रितामिस्रं प्रातरिवारुणोदयात् ।
यथा महान् रजोराशिर्व्वायुमात्रेण नश्यति । तथा मुग्गुलसैन्येन नष्टं काश्मीरसैनिकं ।
काश्मीरसैनिके नष्टे मुग्गुलैर्व्विजयः कृतः । इति श्रुत्वा पुरस्त्रीणां हाहाकारो महानभूत् । ७४५
भयधूतकराम्भोजा विलोलनयनोत्पलाः । कुन्तलाविघृतास्तस्थुः पद्मिन्य इव योषितः ।
शोकान्धकारे सम्प्राप्ते रराज नयनोत्पलं । स्त्रीणां किन्तु मुखाम्भोजं सङ्कोचमगमत्तदा ।
रुदन्तीनां कुचे स्त्रीणां निपेतुर्बाष्पविन्दवः । ज्वलन्तं हृदि शोकाग्निं दूरीकर्तुमिवोद्यताः ।
द्राक्षाचोटफलव्याप्तं पुष्पकुङ्कुमशोभितं । प्रविश्य नगरं मेने स्वर्गतुल्यं वनोभ्रमं ।
शाके प्रयातेऽष्टसपञ्चचन्द्रसङ्ख्ये द्वितीयादिषु कार्त्तिकस्य ।
शुक्लेऽथ पक्षे रविवासरे च सैन्यप्रवेशो नगरे बभूव । ७५०
द्राक्षाफलमयास्वाद्य कापिकापायनीकृतं । निनिन्दुर्मुग्गुलाः सर्व्वे निजकाम्लाधरामृतं ।
कुङ्कुमपुष्पमालाभिर्भूषिताशेषमस्तकः । मुग्गुलासवपानेषु निजं वीर्य्यं व्यकल्पयत ।
कासिमखाननेतारं दृष्ट्वा हैदरचक्रकं । अथ काश्मीरलोकोऽपि तत्सेवनमशिश्रियत् ।
अनेकलोकसंयुक्तं दृष्ट्वा हैदरचक्रकं । भीत्या कासिमखानोऽपि कारागृहे न्यवेशयत् ।
अथ कासिमखानेन रुद्धे हैदरचक्रके । काश्मीरलोकाः सर्व्वे ते दूरं जग्मुर्भयातुराः । ७५५
एकत्र मिलिताः सर्व्वे ते निन्दां चक्रुरात्मनः । परस्परञ्च संमन्त्र्य मतिं युद्धाय चक्रिरे ।
योषित्पत्या विहीनेव चन्द्रहीनेव शर्व्वरी । लोकपूर्णा तथा सेना राजहीना न शोभते ।
इति निश्चित्य सर्व्वे ते लोकाश्चवनमश्रिताः । चणाद्दामायथामासुर्याकोभे कृतनिश्चयाः ।
याकोभमागतं श्रुत्वा साक्षात् कासिमखानकः । सोमारखाननामानं प्राहिणोत्स्वजिगीषया ।
सोमारखानमायान्तं श्रुत्वा याकोभभूपतिः । बभूव बहुसन्नाहः सम्यग्युद्धचिकीर्षया । ७६०
कोऽयं सोमारखानाख्यो युगलेवकसेवकः । एतेन सह योद्धव्यमित्युक्त्वास्य मन्त्रिणः ।
त्यक्त्वा सोमारखानन्तं विजयेश्वरसंस्थितं । प्रस्थानमन्यमार्गेण चकार नगरं प्रति ।
तस्मिन्नवसरे सूर्य्यः साक्षाद्देवचक्रोसयः । आविश्क्रामसंहारभूणेवाक्रमायथौ ।

शनैः शनैर्दिने याते केवलत्वमियेव सा । तत्सङ्गमार्थिनी सन्ध्या ययौ स्थित्वा क्षणान्तरं ।

याकोभमायान्तमवेक्ष्य चन्द्रोदयस्यास्यहृदयदुर्निरीक्ष्यं ।

राजेति नाम द्वयमाकलय्य भीत्येव यातोऽस्तनगप्रदेशं । ७६५

अथान्तरे स याकोभोदूराध्वखिन्नसैनिकः । सदाशिवपुरस्थाने चस्कन्द नगरं क्षणात् ।

हतवति सति कान्ते चुम्बनालिङ्गनानि क्षिपति च निशि वाणान्निर्दयं कामदेवे ।

सुरतनिरतनारीसङ्गमे सन्निकृष्टे समरभुवि नराणां सिंहनादो बभूव ।

मार्गे ग्टहान्तरे वापि हत्वा यवनसैनिकं । सैन्येन महता युक्तो राजद्वारं ददाह सः ।

अलिः सूर्य्योदयार्थीव रात्रिबद्धोऽम्बुजान्तरे । कासेमखानकोऽप्यासीद्रुद्धो निजग्टहान्तरे ।

फतिहखाननामासौ मुग्गुलोधृतसैनिकः । समुद्धुतनुत्राणः सेकन्धरपुरेऽभवत् । ७७०

अज्वाल नगरं सर्व्वं यवनत्रासकारकं । अपि ज्वालाप्रकाशेन काश्मीरैर्युयुधे रणे ।

ततः कासेमखानेन दृष्ट्वा काश्मीरसैनिकं । काराग्टहस्थितारोषाद्धतो हैदरचक्रकः ।

लोठं कृत्वा गते सैन्ये वाजिवारणवाससां । प्रभाते स च याकोभो राज्ञियुद्धान्न्यवर्त्तत ।

रात्रौ दृढ्ञमचक्रताडनमलं राज्ञि स्वयं कुर्व्वति ताराराजसमूहमम्बरवणिग्व्यस्तारयत् सर्व्वतः ।

प्रातश्चण्डकरे प्रभौ कमलकोशोत्पाटनं तन्वति प्रालेयश्रमवारिणाकुलतरस्ताऽगोपयत्तं क्षणात् ।

जाते प्रभातसमये शशिनि प्रयाते चास्तं क्षणाद्दिनकरेण तमोनिरस्तं ।

याकोभभूपतिरतीव बभूव भीतः सोऽभूच्च मुग्गुलजनः सकलः समेतः । ७७५

प्रातश्चलति याकोभे यवमाननगरान्तरं । सुसूराविपुदुत्रेन राघमल्लप्रमानसाः ।

याकोभं चलितं ज्ञात्वा दृष्ट्वा भग्नं स्वसैनिकं । स्वयं कासेमखानोऽपि निर्जगाम जयोत्सुकः ।

येन येन स याकोभोमार्गेण चलितोऽभवत् । तेन तेन हि कासेमखानकोनिर्ययौ स्वयं ।

तस्य कासेमखानस्य बहुलोकसमाहृतः । अलंमाशिरखानाख्योबभूव चरणानतः ।

अलंमाशिरखानस्य तैलदामनिवासिनः । सिचेण शंशचक्रेन युद्धमासीत् परस्परं । ७८०

फतेहखाननामाभून्मुग्गुलोबहुसैनिकः । नगरान्तररक्षार्थं सेकन्धरपुरस्थितः ।

युद्धं याकोभभूपालखानकासेमयोरभूत् । काश्मीरक्षिप्तपाषाणशरतोमरदारुणं ।

अथ काश्मीरलोकानां विरोधउदभूत् पुनः । राजाहमेव राजाहमिति कोलाहलान्वितः ।

विरोधमुत्थितं ज्ञात्वा मत्तायश्चानचोदितः । ययौ याकोभभूपालः काष्ठवाटान्तरं पुनः ।

ततोयोसोभखानेन सेरमस्तदकेन च । सन्धिः कासेमखानस्य विहिता शरणार्थिनः । ७८५

तेन कासेमखानेन ज्वालदीनभूभृतः । योसोभखानप्रमुखाः प्रहिताश्शरणान्तिकं ।

ज्वालदीनभूपेन समस्ताश्शरणागताः । संमानिताः सदा श्रितैः खानयोसोभकादयः ।

कश्मीरेषु महाशीतव्यथितानेकमानवः । आययावथ हेमन्तो द्वितीयइव मुग्गुलः ।

ततोयवनगेहेषु पपात हिमसन्ततिः । विजये विहिते यद्वः पुष्पवृष्टिरिवाम्बरात् ।

याकोभभूपस्य कृतश्रमस्य रणाय कुर्व्वाणइवोपदेशं।
पुष्पोत्करैः संकृतसर्व्वमार्गो वसन्तकालः प्रकटीबभूव।
अथ याकोभभूपालः काष्ठवाटप्रदेशतः। आययौ मुग्गुलाञ्जेतुं बहुलोकसमावृतः।
तत्र काजिमखानोऽपि वार्त्तां श्रुत्वा जिगीषया। निर्ययावथ हस्त्यश्वव्याकुलीकृतभूतलः।
तयोर्याकोभभूपालखानकाजिमयोरभूत्। खेचरेशे महायुद्धं सर्पाषाणदुर्द्दिनं।
अथ याकोभभूपालः प्रस्थानं नगरं प्रति। चकारालचितोभूत्वा मुग्गुलैरनुयायिभिः।
धान्यगाशिसमीपस्थं नगमाश्रित्य दुर्गमं। याकोभभूपः सहसा युयुधे सह मुग्गुलैः।
निर्म्मलासितनुत्राणविम्बितार्कमरीचिभिः। एकाश्रमन्धकारेऽपि बभूव वनगह्वरं।
अनेकविगलच्छोकशोणितासवपूरिताः। बभुस्तत्र शिरस्त्राणा यमस्य चषका इव।
अनेकक्षिप्तपाषाणचूर्णीकृतमहीरुहाः। पर्व्वतस्यापि काश्मीराजस्तत्वं न सेहिरे।
स्रुतशोणितसंमिश्रनिर्झराम्बुच्छलेन किं। अभवद्यमराजस्य क्रीडतः कुङ्कुमद्रवः।
इत्थं याकोभभूपालखानकाजिमयोरभूत्। युद्धं तत्साम्यमात्रेण न जयोन पराजयः।
आदूलखाननामापि खानकाजिमचोदितः। जगाम सबलोयोद्धुं काश्मीरान् पर्व्वतस्थितान्।
युद्धे सन्निहिते तेषां सेचराच्छादितागिरिः। सेवकानामिव कुर्व्वाड्गः कालरात्रिं समाहृता।
रराज ध्वनिते मेघे विद्युन्मालानिचञ्चला। जिह्वेव यमराजस्य स्वादचर्व्वणताडिता।
धारासारजले मेघे चलिते निजमेनिके। आदूलखाननामाथं स्वर्गमार्गमथारुहत्।
श्रीरङ्गोनामराजाभूत् ज्यसान्दीनसेवकः। सोऽपि तत्समरं प्राप्य स्वर्गमार्गमशिश्रियत्।
सदाशिवपुरे दुर्गं कृत्वा तिष्ठति मुग्गुले। ज्येष्ठरुद्रसमीपस्थः काश्मीरैराश्रितोगिरिः।
तत्र सन्निहिते युद्धे निर्ययुः शोणितापगाः। बभूव सङ्कुमीयामा सह नद्या वितस्तया।
[ सेनाआदूलनामा पातिशाहिसेवकोयुद्धार्थं जगाम। तस्मिन्नवसरे काश्मीरालिशिरखानकलोके
योकोभलोकस्य युद्धं बभूव। तयोर्युद्धे सन्निकृष्टे आदूलखानोऽपि जगाम। आदूलखानमायातं दृष्ट्वा
याकोभलोको वदति स्म। इह मुग्गुला आगताः ते चालिशिरखानसैनिकं त्यक्ता आदूलखानं जग्मुः।
तेन सह युद्धमभूत्। अलिशिरखानलोकोऽपि आदूलखानसहायतां चकार। याकोभेन सह युद्धं चकार।
आदूलखानोऽप्यलिशिरखानस्य सन्तुष्टो बभूव। पातिशाहिकार्य्यं त्वया कृतमिति वचनमुवाच।
श्रीरङ्गोऽपि रायसिंहबद्धसम्बन्धो बभूव तस्य निकटे चत्वारिंशद्राजपुत्रा आसन् वर्षे पतिते।
श्रीरङ्गोराजपुत्रानवदत्। भो राजपुत्रा यूयं चलत। अहं पङ्गुरस्मि चलितुं समर्थोनास्मि।
ते आवदन् सैवं राजपुत्रजातौ चलनं न वर्त्तते पातिशाहो राजपुत्रेषु सन्मानं करोति।
अतएव अस्माभिर्लड्वा रक्षणीयेति। ते राजपुत्रा न चेलुः। ]
इत्थं विधाय समरं निहते चलोके काजिमखानयनस्य बभूव भीतिः।
भग्नानपत्य यवनान् परिभूयमानाः काश्मीरलोकनिकराः सहसा ववल्गुः।

वार्त्तामेतादृशीं श्रुत्वा ज्यालदीनभूपतिः। सैदयोसोभखानस्य चकाराशां जिगीषया।
वार्त्तां योसोभखानस्य श्रुत्वा याकोभभूपतिः। चचाल गर्जितं श्रुत्वा स्वर्गस्थेव जम्बुकः।
सोकश्मीरसरोजमध्यनिरतं लोभाश्रया मञ्जुलं याकोभाभिधराजिचञ्चलवपुषं सौख्यदविनिर्गमं।
कासिमखानकषट्पदं भययुतं कुर्वन् जयाभिधं सूर्योऽयं जयति प्रकाममहितो योसोभखानाभिधः।
सञ्चचालादयो लोका सैदयोसोभवार्त्तया। चेलुश्चञ्चलचित्ताः श्येनस्येव कपोतकाः।
योसोभखान आयाते भयात् कासिमखानकः। निर्ययावुदिते सूर्ये चकोरो विरहादिव।
सैदयोसोभखानस्य काश्मीरजनसंयुतः। मल्लइमेरनामाभूत् सदा सेवनतत्परः।
सैदयोसोभखानेन ज्यालदीनभूपतेः। काश्मीरा बहवो लोकाः प्रहिताश्चरणान्तिकं।
अथ याकोभभूपालश्चायया काष्ठवाटतः। तथैव मुग्गुलान् जेतुं पतङ्गोऽग्निं यथा महान्।
सैदयोसोभखानेन मल्लदाभिधसंयुतः। हाजीमेरकनामापि प्रहितस्तज्जिगीषया।
तस्याचलाभवत् सेना मुग्गुलानां भूतले। ते उभे तुलया धृत्वा विधिर्बलमिवेक्षत।
यवनैर्वेष्टिते भूमौ काश्मीरैश्च नगोपरि। अन्योन्यसन्निकर्षं तु गन्तुं शक्ता न तेऽभवन्।
सिंहनादोऽभवन्मध्ये सेनयोरुभयोस्तयोः। लोकत्रयस्य प्रक्षोभसंदेशोद्घोषयथा।
ततोऽभूत्तुमुलं युद्धं देवदानवभीषणं। महायोधगणग्रामनिकषोपलसन्निभं।
काश्मीरक्षिप्तपाषाणकम्पितानन्तपल्लवाः। आसन् युद्धं द्रुमा दृष्ट्वा भयाद्धूतकरा इव।
महायोधकृतानन्तसिंहनादापदेशतः। क्रन्दन्निवाभवत्तत्र पर्वतोऽपि भयाकुलः।
योधक्षिप्तशरव्रातच्छन्नस्कन्धा महाद्रुमाः। तद्दृष्ट्वा तुमुलं युद्धमासन् रोमाञ्चिता इव।
युद्धं बहुविधं कृत्वा सुष्ठु मुग्गुलसैनिकं। सबलं भग्नमालोक्य याकोभोऽभूद्भयाकुलः।
मयोधचन्द्रनामन्ये यस्तो यवनराजया। केवलोऽहं कथं शत्रोः सङ्ग्रामसागरे।
इत्युक्त्वा स च याकोभः केवलोऽप्यचलत्ततः। काष्ठवाटान्तरं प्राप लज्जमानो दिने दिने।
ज्यालदीनसेवार्थं गते योसोभखानके। जाताभूत्तत्र बल्लकः कश्मीरेष्वधिकारवान्।
विचारे विहिते तेन निर्वैरो सकलो जनः। चकोर इव शीतांशावुदयं प्रति गच्छति।
कुर्वन्नेकदा हिंसां वणिजं निजवेश्मनि। कण्ठे निबध्य तन्मांसं न नरं प्रत्यवेलयत्।
यः कश्चित् पुरुषो मोहात् प्राणिहिंसां करिष्यति। एतादृशं महत्कष्टमवाप्स्यति न संशयः।
एकदा यवनः कश्चिदपराधविनाकृतं। कश्चिज्जघान काश्मीरं पुरुषं मदविह्वलः।
निहतं पुरुषं सम्यगन्तर्धाय गतान्तरे। न मया निहतः कश्चिदित्यूचे स मृषा वचः।
विश्वासस्तत्कुटुम्बेन तत्क्षणं सैजबल्लकः। उवाच हेतुना केन काश्मीरो निहतस्त्वया।
उवाच यवनस्तस्य नैव कश्चिन्मया हतः। यद्यप्रक्षितस्तस्य कबन्धः कुत्र तिष्ठति।
इत्थं कृतप्रतिज्ञोऽस्मिन् यवने सैजबल्लकः। लोकानाज्ञापयामास सरस्यन्तर्विलोकितां।
सरस्यालोकिते सम्यक् कबन्धे निर्गतेऽपि च। यवनस्यापराधोऽभूत् पुरुषं निहतस्तदा।

अपराधिनमालोक्य यवनं मेर्जवङ्गकः । शास्त्रोक्तेन विधानेन दण्डं तस्य समादिशत ।
ततो जल्लालदीनेन पृष्टो योसोभखानकः । उवाचानम्रकाश्मीरगुणानानतमस्तकः ।

कश्मीरदेशो विदितो विधात्रा स्वर्गस्य निर्माणइव द्वितीयः ।
शेषः समर्थो रसनासहस्रेण वक्तुं न गुणान् यदीयान् ।
द्राक्षाफलानि सममाचनम्रमधुरपूराणि विहाय यस्मिन् ।
शृङ्गारिलोका अमृतं त्यजन्ति पिबन्ति कान्ताधरपल्लवानि ।
यत्राङ्गनानां सततं मुखानि विलासलीलाखिपरम्पराणि ।
चकासति निम्नचलद्विरेफमालाश्रितानीव सरोरुहाणि ।
हाहा तुषारं व्यथयत्यजस्रमिति स्तनाङ्कलग्नं विधूय ।
यस्मिन्नभीष्टं पतिलोकमध्ये नारी विलासं प्रकटीकरोति ।

अन्योऽपि मन्त्रिणस्तस्य जगदुर्जगदीश्वरं । चक्रवर्तिसमख्याता गुणाः काश्मीरसम्भवाः ।
यस्मिन् भगवती सन्ध्या सन्ध्यानां स्थितये सदा । ददाति दर्शनं पीठे सलिलागमनिर्गमैः ।
यत्रामरेश्वरः साक्षाद्धिममूर्तिधरो विभुः । वर्द्धते शुक्लपक्षेऽसौ कृष्णपक्षे च हीयते ।
भगवान् स्वयमग्निः स यत्र प्रज्वलते सदा । नेत्थं विद्यते यत्र भास्करोऽत्र दृश्यते ।
अथ जल्लालदीनोऽसौ श्रुत्वा काश्मीरजान् गुणान् । निर्ययौ दर्शनार्थाय लाहोरनगरान्तरात् ।
जल्लालदीनभूपालः कश्मीरनगरान्तरं । आषाढशुक्लपञ्चम्यामाससाद ससैनिकः ।
आषाढशुक्लसप्तम्यामाशीर्वादपरायणान् । पुपोष स्वर्णदानेन भूपो ब्राह्मणबालकान् ।
ततो मार्तण्डमाश्रित्य गोप्रदानानि भूपतिः । मुक्तासुवर्णयुक्तानि ब्राह्मणेभ्यः समार्पयत् ।
द्राक्षाखोटफलोत्फुल्लदिव्यतालीवनाश्रितं । कश्मीरदेशमालोक्य तुतोष धरणीपतिः ।
वितस्तातीरमाश्रित्य पश्यतो नगरस्थितिं । जल्लालदीनभूपस्य बभूवातीव कौतुकं ।
ज्येष्ठरुद्रसमीपस्थं नानापुष्पोपशोभितं । सरस्तं पश्यतस्तस्य चमत्कारो महानभूत् ।
जल्लालदीनपादाब्जपवित्रीकृतमस्तकः । शरणं शरणीकर्तुं याकोबोऽपि समाययौ ।
शरणार्थिनमायातं याकोबं शरणागतं । मानसिंहसमीपालसेवकं कृतवान्नृपः ।
देशान्तरं समासाद्य चक्रवर्तिसमर्पितं । सुखं चकार याकोबो मार्गखेदपदागतः ।
जल्लालदीनभूपालो दृष्ट्वा कश्मीरमण्डलं । देशं योसोभखानाय दत्त्वा देशान्तरं ययौ ।
मेर्जयोसोभखानोऽसौ नृपसेवाविचक्षणः । देशं ररक्ष निःशेषमादेशेन विशेषतः ।
श्रीमज्जल्लालदीनेन मेर्जयोसोभगोचरः । विहितः काजिमालाख्यः काश्मीरेऽधिकारवान् ।
वार्षिके ढौकिते तेन मेर्जयोसोभसेवकाः । अधिकारविहीनास्ते सर्वे प्राकृतिकाइव ।
न दत्तं तेन कस्मैचित् भुक्तं स्वस्यैव वा । किन्तु राशीकृतं धान्यं क्षमा सर्वमिवाखुना ।
लोका योसोभखानस्य काजिमालेन भर्त्सिताः । बभूवुः क्षुधया क्षामा निदाघेनेव चातकाः ।

देशे योषोभखानेनाश्रिते ते निर्वृत्तंजनाः । उदयाद्रिङ्गते सूर्ये प्रातः पद्माकरा इव ।
समर्पिताः प्रतिग्रामं कार्षिकाः कृतवार्षिकाः । धान्यक्रयास्तु पुनर्युद्धश्रद्धया तेन वारिताः ।
प्रवर्त्तते यथा हंसः क्षीरनीरविवेचने । तथाभूत् सोऽपि धान्यक्रयणोचितविचारणे ।
अब्बालदीनसेवार्थं गते योषोभखानके । मेर्जेअस्करनामाभूत्तत्पुत्रोऽधिकारवान् ।
कलङ्करहितः साक्षात्तदा सर्वशिरोमणिः । सुधामयवपुः सोऽयं बालचन्द्र इवाबभौ । ९१५
सेवकोऽयवनो लोकं त्रितस्तातीरमाश्रितः । उद्धृतां काष्ठभारोऽयमित्यादिश्य व्यमर्दयत् ।
तादृशं यवनं दृष्ट्वा मेर्जेअस्करकः स्वयं । उवाच सचिवान् शीघ्रं पश्यध्वं हन्ति मानवान् ।
अहो मत्सेवकाल्लोकान् काश्मीरान् व्यथयन्ति किं । अब्बालदीनभूपालात् भयं वर्त्तते कथं ।
मार्गे नास्ति विलुण्ठनं न च भयं चौरात्तथा दुर्जनाद्ग्रामे वा नगरे प्रयच्छति वणिग्लोकोऽत्र शुल्कं क्वचित् ।
मेघा वर्षन्ति मेदिनी फलयुता सदार्षिकाः कार्षिकादेश रक्षति न क्षितिः चतिरहे अब्बालदीनाभिधे ।
अधुना भवता शीघ्रं यवनोऽयं निरुध्यतां । इत्याज्ञप्तो निरुद्धं तमभावत् सचिवः क्षणात् । ९२०
चलिते यवने तस्मिन् भयार्त्तः सचिवोऽब्रवीत् । भगवन् यवनः सोऽयं लङ्घयन् पलायितः ।
इत्युक्ते तेन भूयः स मेर्जेअस्करकोऽवदत् । अधुना चलिते तस्मिन् मद्दृक्ं वचनं कुरु ।
मध्यवितस्तमानीय नावं काष्ठसमन्वितां । तथा दहन्तु लोकानां यथा भीतिर्भविष्यति ।
तथाविधे कृते तेन मन्त्रिणा यवनास्तदा । ज्वलन्तीं नावमालोक्य भयेनासन् मृता इव ।
यः कश्चिद् यवनो लोभात् काश्मीरान् पीडयिष्यति । स निजस्यापराधस्य सत्वरं फलमाप्स्यति । ९२५
भूतलान्निर्गता रेजे कुङ्कुमाङ्कुरसन्ततिः । शरदिन्दु यथा शेषशिरःपङ्क्तिरिवोत्थिता ।
प्रादुराधीलतोश्चिता निर्मलाङ्कुरचोलकं । शिखा कुङ्कुमपुष्पाणां लब्धेव शनैः शनैः ।
कुङ्कुमपुष्पशोभाढ्यं द्राक्षाक्षोटसमन्वितं । दृष्ट्वा पद्मपुरग्रामं निनिन्द त्रिदिवं जनः ।
खारीके वापिते बीजे श्रावणे भुवि वाषिकैः । अर्द्धखारीप्रमाणानि पुष्पाण्यवचितानि तैः ।
प्रातर्यावन्ति पुष्पाणि चितानि धरणीतलात् । आविक्षितानि तावन्ति सायंमध्याह्नयोरपि । ९३०
यदाप्रभृति नागेन तक्षकेण प्रदर्शितं । तदाप्रभृति तादृक्षं कुङ्कुमं नाभवद्भुवि ।
कश्चित्पुष्पावचयनिरतो डोकयानोऽपि कश्चित् कश्चिद्भारप्रमथितशिरा नौप्रयानोऽपि कश्चित् ।
कश्चिन्नित्यं तुलननिरतो रक्षणे कोऽपि तस्मिन् काले बहुलघुसृणव्याकुलो लोक आसीत् ।
इति कुङ्कुमवर्णनं ॥
षड्वर्षेष्वतीतेषु अब्बालदीनभूभृता । योषोभखानादाहृत्य देशोऽन्येषु समर्पितः ।
आयाद्यखान आयाते मेर्जेयोषोभसैनिकं । पृथक् पृथक् ययौ याते वात्याविव रजोभरः ।
श्रीमदब्बालदीनेन प्रहितौ निजसेवकौ । आयाद्खानघोलतानमहम्मदकुलखानकौ । ९३५
आयाद्खानकौ ज्ञात्वा अब्बालदीनसेवकौ । देशाधिपतितां हत्वा प्रभुपादान्तिकं ययौ ।

# राजतरङ्गिणीसंग्रह:



राजग्रन्थेषु ये भूपा: कथिता: कविभि: कलौ । काश्मीरदेशशासाध्यपदगा: पृथिवीभुज: ।
तेषामनुक्रम: संक्षेपतया हि लिख्यतेऽधुना । षट्सु वर्षशतेष्वेव विपञ्चाशद्युतेषु च ।
प्रयातेष्वादिगोनर्द: प्रशास पृथिवीमिमां । काश्मीरेष्वादिगोनर्द: ख्यात: सर्व्वधराभुजां ।
समकालभव: पाण्डुपुत्राणां शौर्य्यशालिनां । ३५ । ६ । सुमुद्दामोदरस्तस्य भूमिपालशिरोमणि: ।
पत्नी यशोवती तस्य राज्यभाक् तदनन्तरं । ३५ । ६ । सुतस्तस्याम महाराज्ञा बालगोनर्द इत्यथ ।
भजन् पैतामहं नाम कलिकाले ( ३० ) ऽथ भूमिपा: । आशायभ्रष्टा: निर्णष्टनामकास्तत: परं ।
पञ्चत्रिंशच्च त्यागीरामग्रा: विस्मृतिसागरे । विस्मृता राजान: ( ३५ )

[ कौरवकौन्तेयसमकालभवाद्दामोदरपुत्रान्नृपा गोनर्दादारभ्य विस्मृता: । तद्राज्ये शतवर्षाणि ( १२६६ ) ]

यदुक्तं । वर्षाणां द्वादशशती षष्टि: षड्भिश्च संयुता । भूभुजां कालसंख्यायां तद्वापश्चात्तनेष्वेनादिति ।
राजाऽभवल्लवोनाम काश्मीरेष्वथ तत्सुत: । ( व ३५ ) तत: कुशेशयाख्योऽभूत् ( व ३ । मा ८ ) खगेन्द्रस्तत्सुतस्तत: । ( व ६० )
अथ सार्य्यवर्ष्योऽभूत् सुरेन्द्रस्तत्सुतो नृप: । ( व ३० । मा ६ ) [ तस्मिन् निस्सन्ततौ सति । ]
अथान्यवंशजो राजा गोधरो नाम भाग्यवान् । ( व ३५ । मा ७ ) तदङ्गज: सुवर्णाख्य ( व ६० ) तत्सूनुर्जनको नृप: ( व ६ )
शचीनरस्तस्य सूनु ( व ३१ ) स्त्रोकस्तत्पितृव्यज: । ( व ६२ ) जलौकस्तत्सुतो नाम काश्मीरेषु सुखप्रद: । ( व ३० )
अथान्यवंशज: ख्यात: शापात् सर्पतनुं जित: । दामोदरो द्वितीयोऽसौ सत्ययुगनृपोपम: । ( व २५ )
अथाभवन् स्वनामाङ्कपुरत्रयविधायिन: । हुष्कजुष्ककनिष्काख्या युगपद्राज्यकारका: । ( व ६० )
तेषामनन्तरं भूपोऽभिमन्युर्मेधायशा: । ( व ३५ ) निष्कण्टकस्तत: ख्यात: शतमन्युरिवापर: ।
ततोऽभिमन्योर्दायस्य समये काश्मीरमण्डले । बौद्धोपद्रववशभूते सर्व्वप्राणिक्षयंकरे ।

[ तस्मिन्नवसरे हि नागाव्यर्थचित्तेन चन्द्रदेवब्राह्मणेन निवारितं कष्टतरं । ]

राजा तृतीयगोनर्द: प्राप काश्मीरवोल्लक: । ( व ३५ ) पुत्रोऽभिषेक: श्रीमान् ख्यातस्तस्य यशस्विन: । ( व ३५ । मा ६ )

